२८०६६
Digitized by Arya Samaj Foundation Chennai and eGangotri

# शास्त्रतत्त्वरत्नम्

[ प्राच्य-मत-मण्डन-परम् ]

आयुर्वेदरत्नाकरेण पण्डितवरेण
श्रीव्रजविहारि चतुर्वेदिना
विरचितम्

प्रोफेसर पण्डित देवदत्तत्रिपाठिना
विदुषां मुदे सम्पाद्य
प्रकाशितम्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# शास्त्रतत्त्वरत्नम्

[ प्राच्य-मत-मण्डन-परम् ]

CHECKED 1973
Initial

आयुर्वेदरत्नाकरेण पण्डितवरेण
श्रीब्रजविहारि चतुर्वेदिना
विरचितम्

प्रोफेसर पण्डित देवदत्तत्रिपाठिना
विदुषां मुदे सम्पाद्य
प्रकाशितम्

श्री अयोध्याप्रसाद झा द्वारा हिन्दुस्तानी यंत्रालये मुद्रितम्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

ऋते ज्ञानान्न मुक्तिः
पुस्तक सं०
आगत सं०
तिथि०
गुरुकुल पुस्तकालय काँगड़ी.

# यत्किञ्चिन्निवेदनम्

यद्यपि शीघ्रतया प्रकाशितेऽस्मिन्निबन्धे मुद्र्यमाणपत्रपाठजनितानां बहूनां दोषाणां संभवस्तथापि "गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः" इति स्मरद्भिः "दोषेषु वाचंयमैः परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसद्भिः" सद्भिर्विद्वद्भिर्यानि कानिचित्स्खलितानि संशोध्य मत्कृतः प्रयत्नः सफलीकरणीय इति शिवम् ।

—श्रीव्रजविहारि चतुर्वेदिनः

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

❀ श्री ❀

# सूचीपत्रम्



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

ॐ

# अथ शास्त्रतत्त्वरत्नम्

माया यस्यास्ति सृष्टि-स्थिति-लय-विषये
साधु-साहाय्य-कर्त्री ।
भीत्या वायुर्विवस्वान् पवत उदयते
शासने वर्तते च ॥
कारुण्यान्मुक्तिरेतच्छ्रुति-शिरसि मतं
ज्ञात-वेदान्त-वित्तम् ।
तद्ब्रह्मज्ञानरूपं स्फुरतु च हृदये
गुम्फितुं तत्त्व-रत्नम् ॥ १ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दृष्ट्वा रागादि-लग्नं सममपि भुवनं
दुःखपङ्के निमग्नम् ।
शम्भोः शान्तावतारः स्ववचन-विदितो
मालवीयो महात्मा ॥
काश्यामीशानपुर्यां निज-भुज-जनिते
विश्वविद्यालयेऽस्मिन् ।
सर्वेषामिष्ट-सिद्ध्यै समिति-मरचय-
द्वैद्य-सम्मेलनाख्याम् ॥२॥
तत्रापेद्यं समेषामिह हित-विधये
शास्त्र-तत्त्वात्म-रत्नम् ।
येन स्यात्सर्वलोके सपदि हितविधेः
स्वान्त आनन्द-लेशः ॥
शास्त्रस्थं तत्त्वरत्नं सकल-हितकरं
संग्रहीतुं नियुक्तः ।
प्राज्ञानां पाद-सेवा-कृतमति-विभव-
स्तत्त्वरत्नं चिनोमि ॥३॥

---

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथेदानीं विश्वमेव दुःखपङ्के निमग्नमालोच्य करुणाकलित-स्वान्तेन शिवाऽवतारभूतेन पुरुषधौरेयेण मद-मोह-रहितेन मदनमोहनेन समारब्धे प्रतिष्ठापिते काश्यां विश्वविद्यालये विश्वजनीने अखिल-भारतवर्षवैद्य-विद्वज्जन-सम्मेलनात्मके महासदसि सत्यपि श्रुतिस्मृतिपुराणोपपुराणेतिहासदर्शनादि-रूपे महति निबन्धेऽज्ञानोपहतत्वादालस्याच्च ततस्तत्त्वरत्न-निचयं लब्धुमपारयतां समेषामेव जनानां समपेक्षितं शास्त्रतत्त्व-रत्नात्मकं निबन्धमाविर्भावयितुमाज्ञप्तो निबन्धमिममाविर्भा-व्य विश्वजनहस्ते समर्पयामि तदिदं निबन्धरत्नं केनाप्यगतार्थं श्रुतिस्मृतिपुराणेतिहासदर्शनागमायुर्वेदानां तत्त्वरत्ननिचयादेवा-हृतं सर्वेषामेव तत्तद्विषयवतां हृदि चमत्कारमारचयेत् ।

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।

अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥

इति न्यायेन रोगिणां मुमूर्षूणां सारभूतं रसायनमिवा-कामानां काम्यमिव केषाञ्चिन्मत्सरग्रस्तानां ततो लाभमनिच्छ-तामरोचकमप्यन्येषां ततो विपरीतमतीवरोचकं भवेत् ।

इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ।

इति न्यायेन स्वल्पमपि सारभूतं सकलतत्त्वरत्ननिचयैः प्रपाणकरसन्यायेन समेषामेव सहृदयानामस्मद्हृदयानाञ्च मोदाय भवत्विति सदाशिवं प्रार्थये ॥

अथेदानीं प्रकृतनिबन्धमारभमाणः शेषशेषिभावन्यायेन

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकृतसभानुगुण्येन दोषधातुमलादिरूपमेव प्रधानीकृत्य तत्साध्यकत्वेन तदङ्गतयाऽन्यदीयतत्त्वरत्नमपि संजिघृक्षामि ।

अथातो दोषधातुमलादीनां सर्वतन्त्रसिद्धान्तं व्याख्यास्यामः ।

तत्र परिणामव्यावर्तमानस्वभावसांसिद्धिककर्तृभोक्तृयदृच्छोपनिपातक्षणिकमहाभूतपञ्चचतुस्त्रिगुणसमुदायात्प्रत्यारब्धधातुद्रव्यसमुदायारब्धप्रत्ययात्मके जगति जङ्गमस्थावरोद्भिज्जाण्डजादीनामुपचयाऽपचयभविष्णूनां स्वरूपस्वभावौ दोषधातुमलेभ्य एव समुपलभ्यते ।

अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम् ॥
प्रविश्य हेमाद्रि - गुहा-गृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः ॥

इति श्लोकार्थमनुघटयन्तोऽध्ययनविरहिता भारतीयानां संस्कृतवाङ्महाह्रदसुधोत्सेकबिन्दुपान - रूपश्रवणसुखवञ्चिता अपि परमसाहसिका नैवम्मन्यन्ते तथापि वेदमूलेतिहासपर्य्यन्तेषु सर्वत्र पञ्चमहाभूतविकारेभ्य एव दोषाणां समुपलब्धिस्तदिदानीं प्रथमं चार्वाकमतमनुसृत्य स्थाप्यन्ते महाभूतविकाराः। पृथिव्यादीनि चत्वार्य्येव तत्त्वानि, तेभ्य एव देहाकारपरिणतेभ्यः किण्वादिभ्यः मद इव चैतन्यमुपजायते । तेषु विनष्टेषु स्वयं विनश्यति तदिदं श्रुतिसिद्धम् । तथाच श्रुतिः "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विनश्यति न प्रेत्य संज्ञास्तीति ।" तस्माच्चैतन्यविशिष्टदेह एव आत्मा । देहातिरिक्ते आत्मनि प्रमाणाभावात् । प्रत्यक्षमात्र-प्रमाणकक्षीकरणेन अनुमानादेरनङ्गीकारेण प्रमाणाभावात् । मतान्तरे चैष दोषो वज्रलेपायते ।

अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः ।
केनेदं चित्रितं तस्मात्स्वभावाच्च व्यवस्थितिः ॥

इति सन्दर्भेण साधयति दोषधातुमलादिकान् तथापि पाश्चात्या भारतीयविज्ञानविरहिणः

'न वेत्ति यो यस्य गुणप्रकर्षं ।
स तस्य निन्दा सततं करोति ॥
यथा किराती करिकुम्भसंस्थां ।
मुक्तां परित्यज्य विभर्ति गुञ्जाम् ॥'

इति न्यायमनुकुर्वन्त्येव । पश्यन्तु तावद्बौद्धानुशासनम् । चित्रचैत्रात्मकानां सुखादीनां चत्वारि आलम्बनसमनन्तर-सहकार्यधिपतिरूपाणि कारणद्रव्याणि । एवं चित्रचैत्रात्मकः स्कन्धः पञ्चविधो रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकस्तत्र रूप्यन्त एभिर्विषया इति । सविषयाणीन्द्रियाणि रूपस्कन्धः, आलयविज्ञानप्रवाहो विज्ञानस्कन्धः, प्रागुक्तस्कंधसंबन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः, गौरित्यादिशब्दोल्लेखी संविज्ञानप्रवाहः संज्ञास्कन्धः, वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशाः उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धाः ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदिदं सर्वं दुखं दुःखायतनम्। दुःखसाधनञ्चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं सम्पादयेत्। अतएवोक्तम् "दुःख-समुदायनिरोधमार्गाश्चत्वारः। आर्य्यस्य बुद्धस्याभिमतानि तत्त्वानि तत्र दुःखं प्रसिद्धम्। समुदायो दुःखकारणम्। तद्द्वि-विधम् प्रत्ययोपनिबन्धनो हेतूपनिबन्धनश्चेति। तत्र प्रत्ययोप-निबन्धनस्य संग्राहकं सूत्रम्। यथा 'इदं प्रत्ययफलम्' इदं कार्यं येऽन्ये हेतवः प्रत्ययन्ति गच्छन्ति तेषाम् नाना हेतूनां भावः प्रत्ययत्वं कारणसमवायस्तन्मात्रस्य फलं न चेतनस्य कस्यचिदिति सूत्रार्थः। तथा बीजहेतुरङ्कुरो धातूनां षण्णां समवायाज्जायते। तत्र पृथ्वी धातुरङ्कुरस्य काठिन्यं गन्धञ्च जनयति। अब्धातुः स्नेहं रसं च जनयति। तेजोधातूरूपमौष्ण्यं च! वायुधातुः स्पर्शनं चलनं च। आकाशधातुराकाशं शब्दं च। ऋतुधातुः यथायोगं परिणामं जनयति। हेतूपनिबन्धनस्य च संग्राहकं सूत्रम् शास्त्रविस्तरभयात्त्यज्यते। द्वादशायतनपूजा श्रेयस्करीति बौद्धनये प्रसिद्धम्।

ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च।
मनोबुद्धिरिति प्रोक्तं द्वादशायतनं बुधैः॥
पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्।
धर्मायतनमेतानि द्वादशायतनानि तु॥
रागादीनां गणोऽयं स्यात्समुदेति सदा नृणाम्।
आत्माऽऽत्मीयस्वभावाख्यः स स्यात्समुदयः पुनः॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रत्यक्षमनुमानञ्च प्रमाणं द्वितयं तथा ।
इति मानद्वयेनैव सर्वं समुपलभ्यते ॥

इत्यादिवद्भिस्सौत्रान्तिकैर्बौद्धैरपि भूतानि स्वीकृतान्येव ।

अथात आर्हतमतेन स्थाप्यतेऽधिशरीरं दोषधातुमलादिकम् । एतस्य क्षणिकविज्ञानवादिनो बौद्धस्य मते अन्यः करोति अन्यो भुङ्क्ते 'प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते' इति न्यायात् । न चैतन्मतं युक्तम् । योऽहं प्राक् कर्माऽकरवं सोऽहं सम्प्रति भुञ्जे, इति पूर्वाऽपरकालानुयायिनः स्थिरस्यात्मनः सिद्धेः नच पूर्वाऽपरभागविकलकालकलावस्थितिलक्षणक्षणिकतापरीक्षकैरर्हद्भिः परिग्रहार्हा कार्यकारणभावस्य नियामकत्वान्नातिप्रसक्तिस्तथाहि । यथा मधुररसभावितानामाम्रबीजानां परिकर्षितायां भूमौ रोपितानामाम्रतरूणामङ्कुरकाण्डस्कन्धशाखापल्लवादिद्वारा परम्परया फले माधुर्य्यनियमः । यथा वा लाक्षारसावसिक्तानां कार्पासबीजादीनामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियमः । तथैवेहापि निरूपणेन ।

यस्मिन्नेव हि सन्ताने आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥
कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते ।
शक्तिराधीयते तत्र का चिन्ता किं न पश्यति ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न च कार्य्यकारणभावनियमेऽतिप्रसङ्गो भवितुमर्हति । क्षणिक-विज्ञानवादिमते कार्य्यकारणभावस्थाऽभावात् कार्य-क्षणे कारणस्याभावात् ।

## अथ चैतन्मतेन महाभूतं विचार्य्यते

तत्किं सावयवमनवयवमिति । आद्ये किन्नाम सावयवत्वं किमवयवसंयोगित्वम् ? अवयवसमवायित्वम् ? अवयव जन्यत्वम् ? समवेतद्रव्यत्वम् ? सावयवबुद्धिविषयत्वं वा ? नाद्यः अकाशादावनैकान्त्यात् न द्वितीयः सामान्यादौ व्यभि-चारात् । न तृतीयः साध्याविशिष्टत्वात् । न चतुर्थो विकल्प-युगलार्गलग्रस्तत्वात् । समवायसंबन्धमात्रवद् द्रव्यत्वं समवेत-द्रव्यत्वमन्यत्रसमवेतद्रव्यत्वं वा विवक्षितं हेतुः क्रियते । आद्ये गगनादौ व्यभिचारात् तस्यापि गुणादिसमवायवत्व-द्रव्यत्वयोः सम्भवात् । द्वितीये साध्या विशिष्टता । अन्य-शब्दार्थेषु समवायकारणभूतेष्ववयवेषु समवायस्य साधनी-यत्वात् । अभ्युपगम्यैतदभाणि । वस्तुतस्तु समवाय एव न समस्तिप्रमाणाभावात् । न चापि पञ्चमः । आत्मादिनाऽनै-कान्त्यात् तस्य सावयवबुद्धि विषयत्वेऽपि सावयवत्वाभावात् तस्मात्परमाणुपुञ्जः एव एतत् । अपरे पुनर्जीवाजीव-योरपरं प्रपञ्चमाचक्षते जीवाकाशधर्माधर्मपुद्गलास्तिकाय-भेदात् । एतेषु पञ्चसु तत्त्वेषु कालत्रयसंबन्धितया स्थिति-व्यपदेशः । अनेकप्रदेशत्वेन शरीरवत्कायव्यपदेशः । तत्र जीवा द्विविधाः संसारिणो मुक्ताश्च । भवाद् भवान्तरप्राप्ति-मन्तः संसारिणस्ते च द्विविधाः समनस्का अमनस्काश्च ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र संज्ञिनः समनस्काः। शिक्षाक्रियालापग्रहणरूपा संज्ञा। तद्विधुरास्त्वमनस्काः। ते चामनस्का द्विविधाः त्रसस्थावरभेदात्। तत्र द्वीन्द्रियादयः शंखगण्डोलकप्रभृतयश्चतुर्विधास्त्रसाः पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः। तत्र मार्गगतधूलिः पृथिवी। इष्टकादयः पृथिवीकायः। पृथिवीकायत्वेन येन गृहीता स पृथिवीकायकः। पृथिवीकायत्वेन यो ग्रहीष्यति स पृथिवीकायको जीव एवम् वादिभेदचतुष्टये योज्यम्। तत्र पृथिव्यादिकायत्वेन गृहीतवन्तो ग्रहीष्यन्तश्च स्थावरा गृह्यन्ते न पृथिवीकायादयस्तेषामजीवत्वात्। ते च स्थावराः स्पर्शनैकेन्द्रिया, भवान्तरप्राप्तिविधुरा। मुक्ता धर्माधर्माकाशास्तिकायास्ते चैकत्वशालिनो निष्क्रियाश्च द्रव्यस्य देशान्तरप्राप्तिहेतवस्तत्र सुखदुःखहेतू धर्माऽधर्मौ प्रसिद्धौ। आलोकेनाविच्छिन्ने नभसि आलोकाकाशवदवेदनीये सर्वत्र गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः। अतएव धर्मास्तिकायः प्रवृत्त्यनुमेयोऽधर्मास्तिकायः स्थित्यनुमेयः। अन्यवस्तुप्रदेशमध्येऽन्यस्य वस्तुनः प्रवेशोऽवगाहस्तदाकाशकृत्यम्। स्पर्शरसवर्णवन्तः पुद्गलास्ते च द्विविधाः अणवः स्कन्धाश्च। भोक्तुमशक्या अणवः स्कन्धा द्व्यणुकादयः। तत्र द्व्यणुकादिस्कन्धभेदादणवादिरुत्पद्यते। अणवादिसंघाताद् द्व्यणुकादिरुत्पद्यते। क्वचिद्भेदसंघाताभ्यां स्कन्धोत्पत्तिः। अतएव पूरयन्ति गलन्तीति पुद्गला इति व्यपदेशः। कालस्यानेकप्रदेशत्वाभावेनास्तिकायत्वाभावेऽपि द्रव्यत्वमस्ति तल्ल-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्षणायोगात्। तदुक्तम्—गुणपर्य्यायवत् द्रव्यम्। द्रव्याश्रया-निर्गुणा गुणाः यथा जीवस्य ज्ञानत्वादिसामान्यं तथा पुद्गलस्य रूपत्वादि धर्माधर्मास्तिकायानां यथासंभवं गति-स्थित्यवगाहहेतुत्वादिसामान्यं गुणस्तस्य द्रव्यस्योक्तरूपेण भवनमुत्पादस्तदभावः परिणामः पर्य्याय इति पर्यायाः। यथा जीवस्य घटादिज्ञानसुखक्लेशादयः पुद्गलस्य मृत्पिण्डघटादयो धर्मादीनां गत्यादिविशेषाः अतएव षट् द्रव्याणीति प्रसिद्धिः। केचन सप्त तत्त्वानि वर्णयन्ति। मिथ्यादर्शनाऽविरतिप्रमादकषायवशाद्योगवशाच्चात्मा सूक्ष्मैक-क्षेत्रावगाहिनामनन्तानन्तप्रदेशानां पुद्गलानां कर्मबन्ध-योग्यानामादानमुपश्लेषणं यत्करोति सबन्धः स कषायत्वा-ज्जीवः कर्मभावयोग्यान् पुद्गलानादत्ते तत्र स कषायग्रहणं सकलबन्धहेतूपलक्षणार्थम्। मिथ्यादर्शनाविरतिप्रमाद-कषाया बन्धहेतवः। मिथ्यादर्शनं द्विविधं मिथ्याकर्मोदयात् परोपदेशानपेक्षम्। तत्त्वाश्रद्धानं नैसर्गिकमेकमपरं परोप देशनं पृथिव्यादिषट्कायादिकम् षडिन्द्रियासंयमनम-विरतिः। पञ्चसमितिगुप्तिष्वनुत्साहः प्रमादः। कषायः क्रोधादिस्तत्र कषायान्ताः स्थित्यनुभावबन्धहेतवः प्रकृति-प्रदेशबन्धहेतुर्योग इति विभागः। स्कन्धश्चतुर्विधः। प्रकृति-स्थित्यनुभावप्रदेशास्तु तद्विधयो यथा निम्बगुडादेस्तिक्तत्व-मधुरत्वादिस्वभावः। एवमावरणीयस्य ज्ञानदर्शनावरणकत्व-मादित्यप्रभोच्छेदकाम्भोधरवत्। प्रदीपप्रभातिरोधायक-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुम्भवच्च । सद्सद्वेदनीयस्य सुखदुःखोत्पादकत्वमसिधारा-मधुलेहनवत् । दर्शनमोहनीयस्य तत्त्वार्थाश्रद्धानकारित्वं दुर्जनसङ्गवत् । चारित्रमोहनीयस्यासंयमहेतुत्वं मद्यमदवदायुषो देहबन्धकरत्वं जलवत् । नाम्नो विचित्रनामकारित्वं चित्रकवत् । गोत्रस्योच्चनीचकारित्वं कुम्भकारवत् । दानादीनां विघ्ननिदानत्वमन्तरायस्य स्वभावः कोषाध्यक्षवत् । सोऽयं प्रकृतिबन्धोऽष्टविधः । द्रव्यकर्माऽवान्तरभेदमूलप्रकृतिवेदनीयस्तद्भेदश्च समगृह्णात् । पञ्चनवाष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चदशभेदात् ।

अथ मूलप्रकृतिं वर्णये । यथा अजागोमहिष्यादिक्षीराणामेतावन्तमनेहसं माधुर्यस्वभावादप्रच्युतिः स्थितिर्यथा च ज्ञानावरणीयादीनां मूलप्रकृतीनामादितस्तिसृणामन्तरायस्य च त्रिंशत्सागरकोटिकोट्यः परा स्थितिरित्याद्युक्तं कालदुर्ज्ञानवत्, स्वीयस्वभावादप्रच्युतिः स्थितिः । संसारकारणाद्योगादात्मनो गोपनं गुप्तिः । सा त्रिधा कायवाङ्मनोनिग्रह भेदात् प्राणिपीड़ापरिहारेण सम्यगयनं समितिः सेर्ष्याभाषादिभेदात्पञ्चविधा इत्यादिविचाराचारेण सर्वत्र विजयलाभः स्वभावः । अस्मिन्मते पञ्चभूतानि स्वीकृतानि ।

"न्याय नामेकनिष्ठानां प्रकृतौ श्रुतवर्त्मनि ।
सम्पूर्णार्थविनिश्चायि स्याद्वस्तु श्रुतमुच्यते" ॥

सम्प्रति पाशुपतदर्शनेनापि प्रतिष्ठापयामि तत्त्वानि । आत्माश्रितो दुष्टभावो मलः । स मिथ्याज्ञानादिभेदात्पञ्चविधः ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मिथ्याज्ञानमधर्मश्च शक्तिर्हेतुश्च्युतिस्तथा ।
पशुत्वमूलं पञ्चैते तन्त्रे हेया विविक्तितः ॥

पृथिव्यादीनि पञ्चभूतानि रूपादयः पञ्च गुणाश्चेति

शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चकम् ।
बुद्धिर्मनस्त्वहङ्कारः पुर्य्यष्टकमुदाहृतम् ॥

पुर्य्यष्टकत्वं कथमितिचेत्-भूततन्मात्रकर्मेन्द्रियबुद्धीन्द्रियाणां कारणसंज्ञैः पञ्चभिर्वर्गैस्तत्कारणेन प्रधानेन प्रपञ्चकात्मना वर्गेण समारब्धत्वादित्यवेहि ।

अतः परं प्रत्यभिज्ञामतमवलम्ब्योच्यते ।

अथाऽयमात्मा परमेश्वरो भवितुमर्हति ज्ञानक्रियाशक्तिमत्त्वात् । यो यावति ज्ञाता कर्त्ता च स तावतीश्वरः प्रसिद्धेश्वरवत् राजवद्वा आत्मा च विषयज्ञाता कर्ता च तस्मादीश्वरोऽयम् । अवयवपञ्चकाश्रयणीयम् ।

रसेश्वरदर्शनेऽपि तस्मादुक्तरीत्या दिव्यं देहं सम्पाद्य योगाभ्यासवशात् परतत्त्वे दृष्टे पुरुषार्थप्राप्तिर्भवति तदा

भ्रूयुगमध्यगतं यत् शिखिविद्युत्सूर्य्यवद्भाति ।
केषाञ्चित्पुण्यदृशामुन्मीलति चिन्मयं ज्योतिः ।
कर्मयोगेन देवेशि प्राप्यते पिण्डधारणम् ॥
रसश्च पवनश्चेति कर्मयोगो द्विधा स्मृतः ॥

तदेवमुपमानं प्रमाणमुपलभ्य शरीरस्थमुपादानभूतं शरी-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रस्य स्वल्पदीर्घस्थूलायामपृथुचिपिटकषायश्वेतपीतकृष्णाद्यनेकवर्णविशिष्टानां वस्तूनां प्रदर्शनेन सर्वाणि पेशीकल्पानि कृमिमन्यमानानि मूषिकविषाणान्वेषणपराणि कर्माणि सर्वेषामाधुनिकवैज्ञानिकानां मतानि च सर्वमेतद् गगनारविन्दसमवेतत्वे सति नित्यगन्धसमवेतकल्पं द्रष्टव्यम् । कर्मत्वं नाम कर्मणां नित्यसमवेतत्वसहितसत्तासाक्षाद्व्याप्य जातिः ॥

अत्रेदानीं द्रव्यगुण-स्वरूपमुच्यते ॥

सृष्टिसर्जने पूर्वं नवविधद्रव्याणां प्रयोजनम् । पृथिव्यप्तेजोवायुगगनकालदिगात्ममनांसीति । पृथिवीत्वं नाम पाकजरूपसमानाधिकरणद्रव्यत्वव्याप्य जातिः । अप्त्वं नाम सरित्सागरसमवेतत्वे सति सलिलसमवेतं सामान्यम् । तेजस्त्वं नाम चन्द्रचामीकरज्वलनसमवेतं सामान्यम् । वायुत्वं नाम त्वगिन्द्रियसमवेतद्रव्यत्वसाक्षाद्व्याप्यजातिः । आकाशत्वं नाम संयोगजन्याजन्यविशेषगुणासमानाधिकरणविशेषाधिकरणत्वम् । विभुत्वे सति दिक्समवेतपरत्वासमवायिकारणाधिकरणत्वं कालत्वम् । अकालत्वे सति महत्त्वे सति विशेषगुणानधिकरणत्वं दिक्त्वम् । आत्मत्वं नाम अमूर्तसमवेतद्रव्यत्वापरजातिः । मनस्त्वं नाम द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिः ।

रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दश्चतुर्विंशतिर्गुणाः । रूपत्वं नाम नीलसमवेतगुणत्वा-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



परजातिः । एवं शिष्टानां लक्षणानि द्रष्टव्यानि ।

उत्क्षेपणादि पञ्चविधं कर्म भ्रमणरेचनादीनां गमनेऽन्तर्भावः परमाणुतः सर्गः । द्व्यणुकनाशमारभ्य कतिभिः क्षणैः पुनरन्यद्द्व्यणुकमुत्पद्यते । रूपादिमच्च भवतीति वर्ण्यते । आरम्भकसंयोगनाशक्रमेण द्व्यणुकनाशे परमाणौ वह्नि-संयोगे पूर्वरूपादिनिवृत्तौ पुनरग्निसंयोगाद्रूपान्तरोत्पत्तिः । एवं कारणगुणेभ्यः कार्य्यगुणानामुत्पत्तिः । तदुक्तम्— "कारणानि कार्य्यमारभन्ते कारणगुणाश्च कार्य्यगुणानिति" । पीलुपाकप्रक्रिया पिठरपाकप्रक्रिया च वैशेषिकनैयायिक-तनयसम्मता । एवं क्रमेण महाभूतविशेषेण कारणेन कार्यस्य दृश्यमानजगतोऽभावाधिकरणत्वानङ्गीकारादयथानिवृत्तिः । वृथोन्मत्तप्रलापमात्रकोलाहलेन स प्रत्यक्षो न भवेत् । नव-विधप्रमाणेन विना दुरज्ञता तरङ्गायते । अयि ! वैतण्डिकाः प्रत्यक्षं समस्तं कृमिमयं जगन्मन्यमाना अप्रामाणिकं वा वचनम् । श्रोकणादवचनमनुसृत्याभावमुपेत्य निषेधप्रमाण-गम्यः संक्षेपतः संसर्गाभावः प्राक्प्रध्वंसाऽत्यन्ताभावात्मको-भ्रमणेन परमार्थलाभो भवितेति ।

॥ अथेदानीमक्षपादीयं मतमुच्यते ॥

व्याप्यारोपेण व्यापकारोपस्तर्कः सचैकादशविधः । व्याघातात्माश्रयेतरेतराश्रयानवस्थाचक्रकाश्रयप्रतिवन्दिकल्प-नालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदात् । प्रमाणं चतु-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विधम्। साक्षात्कृत्यनुमित्युपमितिशाब्दभेदादित्येवं तर्कप्रमाणाभ्यां वस्तुसिद्धिः। मते चास्मिन् आत्मादि प्रमेयमध्ये एव दोषादिनिवेशोऽनेन पथा गमनं श्रेयस्करं तदनवलम्ब्य गच्छतस्तव प्रमत्तप्रलापमेव दोषादिखण्डनं तत्र मिथ्याज्ञानप्रयुक्तोऽनुकूलेषु रागः प्रतिकूलेषु द्वेषस्तदेतत्प्रतिकूलाऽनुकूले न स्मरन्ति विज्ञानविरहिताः सेयमान्वीक्षिकी।

'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तितः॥'

तत्त्वज्ञानान्निःश्रेयसं तत्प्रकारश्च तत्त्वज्ञानाद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराऽपायादपवर्ग इति परम्परानुबन्धाच्च रागादीनां मूढो रज्यति रक्तो मुह्यति मूढः कुप्यति कुपितो मुह्यतीति। ततस्तैर्दोषैः प्रेरितः प्राणी प्रतिषिद्धानि शरीरेण हिंसास्तेयादीनि समाचरति। वाचा अनृतादीनि मनसा परद्रोहादीनि सेयं पापरूपा प्रवृत्तिरधर्ममावहतीति। सोऽयं प्रज्ञापराधोऽज्ञानधारया आधुनिकाः प्रत्यक्षमात्रपराः क्षीरं परित्यज्याज्ञानरोचकग्रस्ताः सौवीरे रुचिमनुबध्नन्तीति नाटकपक्षपातिनस्ते वच इत्युपेक्ष्यते। तस्मात्परमेश्वरानुग्रहात् श्रवणादिक्रमेणात्मज्ञत्वसाक्षात्कारात् पुरुषार्थमुद्दिशतो दुःखनिवृत्तिरात्यन्तिकी निःश्रेयसमिति।

ननु ईश्वरसद्भावे किं मानं प्रत्यक्षमनुमानमागमो वा। न तावदत्र प्रत्यक्षं प्रक्रमते रूपादिराहित्येन चक्षुराद्यप्रवृत्तेः। नाप्यनुमानं तद्व्याप्य लिङ्गाभावात् नागमो विकल्पासहत्वात्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



किं नित्योऽवगमयत्यनित्यो वा। आद्ये अपसिद्धान्तापातात् द्वितीये परस्पराश्रयात्। उपमानादिकमशक्यशङ्कम् नियत-विषयत्वात्। तस्मादीश्वरः शशविषाणायते। मैवं विवादास्पदं पर्वतपयोधिप्रभृति सकर्तृकं कार्य्यत्वात् कुम्भवत् नायमसिद्धो हेतुसमवेतद्रव्यत्वेन सिद्धेः।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते।

जगतः स्टजतस्तस्य किं नाम न कृतं भवेत्। अत्रेश्वर-त्वखण्डनं परमस्वार्थान्धतया प्रमत्तबालभाषितमेव।

### अथेदानीं जैमिनिमतमनुस्रियते

अपौरुषेये तु वेदे, प्रतीयमानार्थः कुतो न विवक्ष्येत। विवक्षिते तु वेदार्थे यत्र यत्र पुरुषस्य सन्देहः स सर्वो विचारः शास्त्रस्य विषयो भविष्यति तन्निर्णयः प्रयोजनम्। तस्मात् विषय-प्रयोजनत्वात् विचारशास्त्रमारम्भणीयम्। विरुद्धधर्माध्यासो दोषाभावस्य कारणत्वात् प्रामाण्यं परतः। अभावो भेदस्याधिकमोक्तम्। समाधिगतः प्रातीतिको वा स्वाभाविको वा। एतेन विरुद्धधर्माध्यासात् भेदप्रतिभास इति प्रत्युक्तम्। प्रथमेऽसिद्धिः अपरथा स्वाभाविकभेदस्वीकारे दश गकारान् उच्चार चैत्रो यदि स्यात्। नतु दशकृत्वगकारमिति द्वितीये तु न भवेदसिद्धिरिति। कारणमेव न भवतीति वदन् प्रष्टव्यो अभावस्य कार्यत्वमस्ति न वा। आद्ये किमपराद्धं कारणत्वेनेति सेयमुभयतः पाशारज्जुः। तदुक्तं कुसुमाञ्जलौ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भावो यथा तथा भावः कारणं कार्य्यवन्मतम् ॥

तत्र भावरूपकारण-विरहात् स्वतःप्रामाण्यमिति । एवं वादिमतं पूतिकूष्माण्डायते । तत्स्थापनवचनमाकाशमुष्टिहननायते । चेदत्र झटिति-प्रवृत्तेः प्रामाण्यनिश्चयाभावमुत्पादयता । उदयनेन प्रणयगादि । प्रवृत्तिर्हीच्छामपेक्षते तत्प्राचुर्य्येणेति तत्प्राचुर्य्यात् । इच्छाचेष्टसाधनताज्ञानम् । तच्चेष्टजातीयत्वलिङ्गानुभवम् । सोऽपि क्रियार्थसन्निकर्षम् । प्रामाण्यग्रहणं न क्वचिदप्युपयुज्यते । तदपि तु तस्करस्य पुरस्तात् कक्षे सुवर्णमादाय सर्वाङ्गोद्घाटनमिव प्रतिभाति ।

अतएव समीहितसाधनताज्ञानमेव प्रमाणतयाऽवगम्यमानमिच्छां जनयतीति स्फुट एव प्रामाण्यग्रहस्योपयोग इति । किञ्च यदि क्वचिदपि निर्विचिकित्साप्रवृत्तिः संशयादुत्पद्येत तर्हि सर्वत्र तथाभावसम्भवात्प्रामाण्यनिश्चयो निरर्थकः स्यात् । ज्ञानविरहितस्य प्रामाण्यं दुर्लभम्, दत्तजलाञ्जलिकं वा भवेदिति ।

अथेदानीं पाणिनिमतेन प्रकृतं प्रमाणीक्रियते—

यथा स्वप्नप्रपञ्चोऽयमपि मायाविजृम्भितः ॥

तथापि

एवं जाग्रत्प्रपञ्चोऽपि मयिमायाविजृम्भितः ।

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।

पवित्रं सर्वविद्यानामधिविद्यं प्रचक्षते ॥



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति। महाभाष्य-छायायां यथा स्नेहनद्द्रव्योपयोगात् श्लेष्मणः प्रकोपः तद्वद्रूक्षद्रव्योपयोगात् वायोः प्रकोपः।

सांख्यदर्शनमति प्रकृतं सम्पादयति।

तथाहि कश्चिदर्थः प्रकृतिरेव, कश्चिद्विकृतिरेव, कश्चित्प्रकृतिविकृतिः। कश्चिदनुभयरूपः। तत्र प्रकृतिः प्रधानं प्रकरोतीति व्युत्पत्या, मूल प्रकृतिः सत्वरजस्तमसां साम्यावस्था। तदुक्तम्।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न्नविकृतिः पुरुषः॥

इति। अत्र मूलश्चासौ प्रकृतिर्मूलप्रकृतिः सर्वस्य कार्य्यसंघातस्य सा मूलम्। न त्वस्या मूलान्तरमस्ति अनवस्थाप्रसङ्गात्। नच व्यवस्थायां सत्यामनवस्थायां प्रामाण्यमस्ति, वीजाङ्कुरस्थले तु सा प्रत्यक्षप्रमाणकी। अहङ्कारस्य सात्विकराजसतामसभेदात्। सत्वांशमादायैकादशेन्द्रियाणां बुद्धीन्द्रियाणां चक्षुर्घ्राणश्रोत्ररसनत्वगाख्यानां कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थानां मनसश्च सृष्टिस्तामसांशमादाय रूपादितन्मात्राणां सूक्ष्मभूतानां सृष्टिः, रजसस्तु उभयत्र व्यापारजननात्कारणत्वम् तदुक्तम्।

सात्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्राः स तामसस्तैजसादुभयम्॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभिमानोऽहङ्कारस्तस्माद्द्विविधः प्रवर्तते सर्गः ।
एकादशकश्चगणस्तन्मात्रपञ्चकश्चैव ॥

इति । तत्र शब्दस्पर्शरूपरसगन्धतन्मात्रेभ्यः पूर्वपूर्वसूक्ष्मभूत सहितेभ्यः पञ्चमहाभूतानि पृथिव्यादीनि एकद्वित्रिचतुःपञ्चगुणानि जायन्ते । तदुक्तम्—

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥

इति षोडशकस्तु विकार इत्यत्र तु पदमेवार्थकं विकारपदान्तरं योज्यं विकार एवेति न प्रकृतिरिति । ननु पृथिव्या गोवृक्षादयो विकारास्तेषाञ्च क्षीरबीजादयस्तत्कथमुच्यते विकार एवेति । नैष दोषः तत्वान्तरोपादानत्वं हि प्रकृतित्वं नहि क्षीरादिकं पृथिवीतस्तत्त्वान्तरं स्थूलतेन्द्रियग्राह्यतयोः साम्येनारोहाऽवरोहक्रमेण स्थौल्ययोगातिशय घटितचतुर्विधतत्त्वान्तरत्वलक्षणाय.गात् । तल्लक्षणन्तु स्वविशिष्टत्वं स्वापेक्षया तत्वान्तरम् वै० स्वविषयकप्रत्यक्षत्वावच्छिन्नजन्यतानिरूपितजनकतावत् स्थौल्ययोगातिशयान्यतराधिकन्यूनान्यतरस्थौल्ययोगातिशयान्यतरनिष्ठजनकतानिरूपितजन्यतावप्रत्यक्षविषयत्वम् । तदुक्तं तत्त्व कौमुद्याम्—तेषां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वमिति । स तत्पञ्चविंशतितत्त्व साधकत्वेन प्रमाणत्रयमभिमतम् । प्रत्यक्षमनुमानमागमाश्चेति । तदुक्तम् दृष्टमनुमानमाप्तवचनंच सर्वप्रमाणसिद्धत्वात् ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥

इह कार्य्यकारणभावे चतुर्धा विप्रतिपत्तिः प्रसरति । असतः सज्जायत इति सौगताः। नैयायिकाः सतोऽसज्जायत इति। वेदान्तिनः सतो विवर्तः कार्य्यजातम्, न वस्तु सदिति। सांख्याः सतः सज्जायत इति। तत्रासतः सज्जायत इति न प्रामाणिकः पक्षः। असतो निरुपाख्यस्य शशविषाणवत्कारणत्वानुपपत्तेः। तुच्छातुच्छयोस्तादात्म्यानुपपत्तेश्च। नापि सतोऽसज्जायत इति, कारणव्यापारात्प्रागसतः शशविषाणवत्सत्तासंबन्धलक्षणोत्पत्त्यनुपपत्तेः। नहि नीलं निपुणतमेनापि शिल्पिना पीतं कर्तुं पार्य्यत इति तस्मात्कारणव्यापारादनन्तरमिव प्रागपि सदेव कार्य्यम्। सतश्चाभिव्यक्तिरुपपद्यते। यथा पीड़नेन तिलेषु—तैलस्य—इक्षुषु गुडस्य, दोहनेन गोषु दुग्धस्य। असतः करणे तु न किमपि निदर्शनं दृश्यते, कारणेन कार्य्यस्य सम्बन्धवत् भोज्यवस्तुभिर्दोषेण च रोगस्य सम्बन्धः। तदुक्तम्

असत्वान्नास्ति सम्बन्धः कारणैः सत्वसङ्गिभि।
असम्बद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिरितिः॥

किञ्च कारणात्प्रागपि सदेव कार्य्यमिति इतरकारणकार्य्यभेदवद्दोषरोगयोरभेद इति सिद्धम्। तदुक्तं भगवता कृष्णेन गीतायाम्

"नासतो विद्यते भावो नाभावो विद्यतेऽसतः।"

इति। ईश्वरकृष्णेन च असत्करणादुपदानग्रहणात्स-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वं सम्भवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्य्यमिति। अचेतना दोषा रसादिशुक्रपर्य्यन्ता रोगोत्पादनकराः । दोषोत्पादकास्तु विपरीताहारविहारा मधुरादिगणाः सम्यगनुपयुज्यमानाः । यथा जलमचेतनं मत्स्याद्युत्पादनाय। तथा दोषा वतादयो विविधामयकरणाय । एवं प्रमाणपुञ्जेन महाभूतेभ्यो जायन्ते विविधौषधयः—यथा निर्व्यापारायस्कान्तसामीप्येनायसो व्यापार एव पुरुषसंयोगेन प्रकृतेः। पंग्वन्धवच्चायंप्रकृतिपुरुषयोः संबन्धो दोषरोगारोग्यसम्पादकः। स दोषः प्रज्ञापराजन्यो रोगश्च तौ मन्दंमन्दमितस्ततो भ्रमन्तौ दैववशात्संयोगमुपगच्छेताम् । तद्यथान्धः स्कन्धारूढपंगुदर्शितेन पथा समीहितं स्थानं प्राप्नोति पंगुश्च क्रियाशीलान्धसंयोगेन। तथैव प्रकृतिः पुरुषश्च परस्परापेक्षया क्रियाभोगौ दोषेभ्यो रोगारोगेभ्यो दोषाश्चेति परिणामिनां दोषरोगाणां समः समाधिः।

इतः परं पातञ्चलेनोपपाद्यते दोषरोगसंबन्धः—

समाधावचला बुद्धिस्तदा योगमवाप्यष्यसि ।

इति यमादिसमाध्यन्तयोगाङ्गानन्तर्य्यमङ्गिनो योगस्य, न शिष्यप्रश्नतपश्चरणरसावनाद्युपयोगानन्तर्य्यमेव दोषरोगयोः परस्परानन्तर्य्यमधिकारित्वन्तु ब्रह्मजिज्ञासावदेव दोषरोगजिज्ञासयोर्न सम्भवति—कर्त्रैकत्वाच्च योगवैद्यविद्ययोः। य एव हिरण्यगर्भो योगस्य वक्ता स एवायुर्वेदस्य स्मर्ता।

पुस्तकालय
गुरुकुल कांगड़ी
CC-0. Gurukul Kangri Collection, Haridwar.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हिरण्यगर्भो योगस्य वक्ता नान्यः कदाचन । इति

ब्रह्मा स्मृत्वाऽऽपो वेदमिति ॥

चोक्तेर्निरपेक्षशब्दरूपश्रुतेश्च सर्वतः प्राबल्यम् । युजेर्निष्पन्नश्च योगशब्दः सयोगवचनस्तदुक्तं योगियाज्ञवल्क्येन ।

संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः ।

समाधिः समता-लाभो जीवात्मपरमात्मनोः ।

ब्रह्मण्येव स्थितिर्यासां समाधिः प्रत्यगात्मनः ॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि योगस्य ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।

युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति भगवदुपदेशेनेदमायाति, कनकात्कुण्डलमिव, सम्यग् योगाभावे दोषाद्युत्पत्तिरिति । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धञ्चेति पञ्च चित्तस्यावस्थाविशेषाः । तम समुद्रे मग्नं निद्रावृत्तिमञ्चित्तं मूढं क्षिप्माद्विशिष्टं विक्षिप्तम् ।

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढ—

मित्युक्तदिशा चाञ्चल्यं मनसः स्वाभाविकं व्याध्याद्यनुशयजनितञ्च तदाह व्याधिस्त्यानसंशयप्रमादालस्याऽविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्त्वानि चित्तविक्षेपास्तेऽन्तरायः, इति दोषत्रयवैषम्यनिमित्तो ज्वरादिर्व्याधिरित

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



लक्षणाल्लभ्यते दोषेभ्यो रोग इति। दोषरोगयोश्चायस्कान्त-योद्रव्ययश्च सम्बन्धेन विविधवस्तुहिताऽहितानुरूपाः सर्वे रोगा दोषसमुत्था इति सिद्धम्। योगे व्याध्याद्यन्तरायपाते मैत्री-करुणामुदितोपेक्षाणां सुखदुःखपुण्याऽपुण्यविषयाणां भावनात-श्चित्तप्रसादयन् इत्युक्तदिशा चित्तप्रसादनमवश्यं विधेयम्। सद्धृत्यनुष्ठानेन च हेयं दुःखमनागतमिति। एवं स्थिते पाश्चा-त्यानां दोषखण्डनम्।

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥

इति न्यायेन अङ्गुल्यग्रे हस्तियूथशतमास्ते इति विकल्पमात्र वेदितव्यम्। अग्निहोत्रन्यायेन च दोषादीनां सर्वतन्त्रसिद्धत्व प्रमाणप्रतिपन्नम्। नह्यत्र विधौ विरोधः कश्चित्। अङ्गुलि-दीपिकया ध्वान्तध्वंसविधिर्नचास्माकमिव तथाप्यत्र मूकतैव शरणम् सर्वथा वचनविरोधे ह्युदासीनस्य सा शोभते। तथाधिकारन्यायेन गौतमदर्शनादपि सिद्ध्यति। तथा तृतीया-ध्याये द्वितीयाह्निके—६० भूतगुणविशेषोपलब्धेस्तादात्म्यम् दृष्टो हि वाय्वादीनां गुणविशेषाभिव्यक्तिठियमः। गन्धरस-रूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ६२ अप्तेजोवायूनां पूर्वंपूर्वमपोह्याकाशस्योत्तरः ६३ न सर्वगुनानुपलब्धेः ६४ एकैकस्योत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः ६५ संसर्गाच्चानेकगुणग्रहणम्ः ६६ विशिष्टं ह्यपरं परेण पर्वंपर्व-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गुणोत्कर्षात्तत्प्रधानम् । तृतीयाध्याये द्वितीयपादे । ३५ तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः । प्रणिधाननिबन्धाभ्यासः - लिङ्गलक्षण-सादृश्य परिग्रहाश्रयाश्रितसंबन्धानन्तर्य्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः स्मरणम् । न्यायतात्पर्य्य टीकायाञ्च धारणशास्त्रं जैगीषव्योक्तं तत्कृतो ज्ञातेषु वस्तुषु नाडीचक्रहृत्पुण्डरीककण्ठकूपनासाग्रतालु-ललाटब्रह्मरन्ध्रादिषु स्मर्तव्यानां बीजसंस्थानाभरणभूतानाञ्च देवतानामुपनिक्षेपः समारोपस्तथाच तत्र तत्र देवताः समारोपितास्तत्तदवयवग्रहणा स्मर्य्यन्ते इत्यर्थः । तद्वच्छरीरस्य दोषधातवो रोगानुत्पादयन्ति ६३ पूर्वकृतफलानुबन्धात्त-दुत्पत्तिरित्यादि । ४ अध्याये- १ आह्निके ५५ सूत्रे विविध-बाधनायोगाद्दुःखजन्म—२ पादे—१ सू० दोषनिमित्तानां च तत्त्वज्ञानादहङ्कारनिवृत्तिः । दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ४ विद्याऽविद्याद्वैविध्यात्संशय इत्येवं प्रमाणानि सन्ति दोषरोगादीनां परस्परापेक्षत्वे । तदुक्तम्

समस्तलोकशास्त्रैकमत्वयाश्रित्य नृत्यतोः ।
का तदस्तु गतिस्तव बस्तुधी व्यवहारयोः ॥

इति । तत्र काणादप्रमाणादपि दोषेभ्यो रोगोत्पत्तिरिति लभ्यते । नहि सर्वः सर्वं जानातीति न्यायेन विना विमर्श दोषादिखण्डने स्वानभिज्ञतातिशयिता तरङ्गायते चन्दनन्यायेन चैतद्द्रष्टव्यम्,

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तथाहि चन्दनमेकदेशस्थितमपि सकलदेहव्यापिनमाह्लादयति। त्वक्संबन्धाच्चास्य सकलशरीरगता वेदना निरुध्यते। त्वक् च कृत्स्नशरीरव्यापिनी। तथा रूपादिभ्यो रोगोत्पत्तिस्तच्छायापिशाचिनी न विमुञ्चति दुर्बुद्धि-विदग्धानां प्रत्यक्षैकप्रमाणमानिना पृष्ठम्। तदुक्तम्—

"आत्माऽज्ञानमलं निरस्तममलं प्राप्तं न तत्त्वं परम्
कण्ठस्थाभरणादिविभ्रमवशाच्छायापिशाची यथा।
आप्तोक्त्याप्तिनिवृत्तिवच्छ्रुतिशिरो वाक्याद्गुरोरुत्थिता॥

एतन्मते द्रव्यगुणस्वरूपमित्थं व्यवतिष्ठते। रूपरसगन्धस्पर्शवतीपृथिवी। तत्र कृष्णं रूपं पृथिव्याः स्वाभाविकं निमित्त व्यपाश्रयमन्यत्। रसोमधुरादिर्गन्धः सुरभिरसुरभिश्च। स्पर्शस्त्वनुष्णाशीतः। तत्र गन्धो नैजो गुणः पृथिव्याः कारणगुणक्रमाच्च रूपादयः। शब्दस्त्वनभिव्यक्तःसन्नपि नोक्तः। रूपरसस्पर्शवत्यः आपो द्रवाः स्निग्धाः तेजोरूपस्पर्शवत्। ३ स्पर्शवान् वायुः ४ ते आकाशे न विद्यन्ते ५ त्रपुशीशलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् सर्पिर्जतुमधूच्छिष्टानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ६ विषाणी ककुद्मान् प्रान्ते वालधिः सास्नावानिति गोत्वे दृष्टं लिङ्गम् ८ स्पर्शश्च वायोः ९ वायोर्वायुसंमूर्च्छनं नानात्वलिङ्गम् तस्मात्त्वागमिकम् तथा भाष्ये उपस्कारे च। वायुर्वैक्षेपिष्ठादेवता वायव्यं श्वेतमालभेत वायुश्च सर्ववर्णोऽयं सर्वगन्ध

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वहः शुचिरित्यादिविधिशेषीभूतार्थवादादेव वायुसंज्ञाधिगतिः । तत्किमुन्मत्तादिजल्पितडित्थडवित्थादिसंज्ञावद्वायुसंज्ञापीत्यागम य सर्वज्ञप्रणीतत्वमुपपादयता **औपोद्घातिकमीश्वरप्रकरणमारब्धम्** । तु शब्दः स्पर्शादिलिंगद्व्यवच्छेदार्थः । संज्ञा नाम कर्म कार्य्यं क्षित्यादितदुभयमस्मद्विशिष्टानामीश्वरमहर्षीणां सत्वेऽपि लिङ्गम् । जलतुम्बिकान्यायेन वायुर्वेदार्थनिरूपणप्रकरणे उपरिष्टादुपपादयिष्यते । प्रत्यक्षप्रवृत्तत्वात्संज्ञाकर्मणः । १९ अत्र समाहारद्वन्द्वादेकवद्भावः । संज्ञा कर्तुर्जगत्कर्तुश्चाभेदसूचनार्थः । ईश्वरानुमानञ्च क्षित्यादिकार्य्यंलिङ्गम् । तथाहि—क्षितिः सकर्तृका कार्य्यत्वाद् घटवत् । अत्र सकर्तृकत्वमदृष्टाद्वारकक्रतिमज्जन्यत्वम् । कार्य्यत्वञ्च प्रागभावावच्छिन्नसत्ताप्रतियोगित्वम् । नचांकुरादौ सन्दिग्धाऽनैकान्तिकं साध्याभावनिश्चये हेतुमदसत्त्वसन्देहे तस्य दोषत्वात् । अन्यथा सकलानुमानोच्छेदप्रसंगात् । निष्क्रमणं प्रवेशश्चाकाशस्य लिङ्गम् । सांख्यवादिनामपि सम्मतमिदम् । लोकेऽपि दवदाहस्य वेत्रबीजविनाशकत्वरूपान्तरजनकत्ववद् दोषेभ्यो रोगोत्पत्तिरिति सिद्ध्यति द्वयोः संयोगाच्च रोगोत्पत्तिः तदुक्तम् ।

दधित्रपुषं प्रत्यक्षो ज्वरो ज्वरनिमित्तमिति गम्यते । नड्वलोदकं पादरोगो रोगनिमित्तमिति गम्यते षड्भिः प्रकारैः सतां भावानामनुपलब्धिः दूरस्थवनस्पतिन्यायात् । तदुक्तम्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्चेति—

नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति न्यायेन सकलकलेवरे कृमिभ्यो न रोगोत्पत्तिः। बुद्धिमता आप्तवाक्यमनुसरणीयम्। युक्तिप्रमाणाभ्यां वस्तुसिद्धिः। स्वतः प्रमाणे च प्रवृत्तिरिष्टा।

अथेदानीं वेदान्तदर्शनमाश्रित्य स्थालीपुलाकन्यायेन निदर्शनमात्रेण शिक्षयामि।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि।

व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्। इति न लक्षणमलक्षणमिति। सन्देहात्ममूढविचारात्सन्यङ्न विवेचयति। प्रतिवस्तु प्रथमविलोकने सन्दिहाते ज्ञेये वस्तुनि ज्ञानसमुदायेन ज्ञानमुत्पद्यते। व्याख्यानाद्विशेषविमर्शनात् सम्यग्ज्ञानमुत्पद्यते। सन्देहादपि स्वकं लक्षणं न मुञ्चति वस्तुजातम्, नहि अन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवति। नहि देवदत्तस्य श्यामत्वे विष्णुमित्रस्य श्यामत्वम्। विज्ञानविरहिणां मते दोषाद्भिन्नो रोगः स्वयमुत्पद्यते स्वभावादिति परन्तु ते स्वभावमपि न स्वीकुर्वन्ति। अत्र धारावाहिकबुद्ध्या व्यावर्तवादे स्फुटतममुपलभ्यते प्रमाणान्तरविरोध श्रुतौ निराकृतः सम्प्रति श्रुतीनामेव परस्परविरोधे तत्परत्वाऽतत्परत्वाभ्यां निर्णयस्तत्परश्रुत्याऽतत्परश्रुतिबाध इति श्रुतिविप्रतिषेधाच्च। परपक्षाणामनपेक्षितत्वं स्थापितं तद-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्थनिर्मलत्वार्थाभासविनिवृत्तिप्रतिपादनफलन्तु स्वपक्षस्य ब्रह्मणो जगत्कारणत्वयस्य स्थापनम्। पूर्वं विरोधेऽपि सिद्धान्ते न विरोधः। इदानीमाकाशमाश्रित्य चिन्त्यते-आकाशमुत्पद्यते नवेति। नेति तावदुच्यते नवियदश्रुतेः छान्दोग्येनाम्नानात् तैत्तिरीयके-आम्नानात्। अस्ति तु इत्युच्यते-गौण सम्भवात् ३ उत्पत्तिवादिनी श्रुतिर्गौणीभवितुमर्हति कुतः असम्भवात्। सर्वं हि उत्पद्यमान समवाय्यसमवायिनिमित्तकारणेभ्य उत्पद्येत। नचाकाशस्य तानि सम्भवन्ति। एकजातीयकस्य तदुत्पादकस्याभावात्। शब्दाच्च ४ शब्दः खल्वाकाशस्याजन्यत्वं ख्यापयति। बृहदारण्यके वायुश्चान्तरिक्षञ्चैतदमृतमिति नह्यमृतस्योत्पत्तिरुपपद्यते। आकाशवत्सर्वगतश्च नित्यः। स यथाऽनन्तोऽयमाकाश एवमयमात्माऽनन्तो वेदितव्य इति चोदाहरणम्। आकाशशरीरं ब्रह्म आकाश आत्मा। यथा नीलत्वमुत्पलस्य घटेन साधर्म्यं तथा नित्यत्वमाकाशे नात्मनः। एतेन जगत्कारणं ब्रह्म सिद्धम्। एतेन मातरिश्वा व्याख्यातः ८ अनेन वियदृष्टान्तेन मातरिश्वा वायुरपि जन्यत्वे व्याख्यातो द्रष्टव्यः। नतर्कन्यायेन चैतत्सिद्धम्, यथा सर्वेषां पुरतो नृत्यन्नर्तकः सुखं युगपन्निर्वर्तयति, श्रुतिरियं तद्वद्ब्रह्मेतरेषामुत्पत्तिम्, करकङ्कणन्यायेन चैतत्सिद्धं न प्रमाणान्तरमपेक्षते। नहि हस्तकङ्कण दर्पणेन दृश्यत इति। अत्राकाशस्यैवैते पक्षाः समुत्तिष्ठन्ति। नोत्पद्यते छान्दोग्येऽनाम्नानादिति, उत्पद्यते तैतिरीयके आम्नानादिति, असम्भवादुत्पत्तिर्गौणीति।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



बृहदारण्यके सैषाऽनस्तमिता देवता यद्वायुरिति, यावद्विभागश्च विकार इति सिद्धान्त इति तेजोऽतस्तथाह्याह १० छान्दोग्ये सन्मूलत्वमुक्तम् । तैत्तिरीयके वायुमूलत्वमिति विरोधो वायुद्वारा सन्मूलत्वमिति तत्परिहरणीयः, सर्वविज्ञानप्रतिज्ञा च ब्रह्मप्रभवत्वे एव सम्भवति । तज्जलमिति । स तपस्तप्त्वा इदं सर्वमसृजत इति श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वेऽश्रवणमिति । आपोऽतः ११ आपोऽतस्तेजसो जायन्ते इति ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि ता अन्नमसृजन्त अन्नशब्देन व्रीहियवाद्यभ्यवहारयोग्यमुच्यते पृथिव्या ओषधयः ओषधिभ्यो अन्नमिति च तद्धेतुदोषेभ्यो रोगः नह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति इति ।

नन्वीश्वरे प्रमाणोपपत्तौ सर्वमिदं स्यात् तदेव तु न पश्याम इति । मैवम् अत्रापि स एव न्यायः समुत्तिष्ठति । नह्येष स्थाणोरपराध इति । अपि च नागृहीते विशेषणे विशिष्टबुद्धिरुपजायत इति । नहि सत्तारूपे ब्रह्मण्यगृह्यमाणे सन् घट इति गृह्यते इति तदेवमुत्पत्तिश्चिन्तिता । लयस्तु विपर्ययेण तदुक्तम् विपर्ययेणात उपपद्यते चेति । उत्पत्तिस्थितिलय भूतानां ब्रह्मणः श्रूयन्ते "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्यन्त्यभिसंविशन्तीति" । आरोहावरोहन्यायेन चैतत्द्रष्टव्यम् । यथाहि लोके येन क्रमेण सोपानमारोहति तद्विपरीतेनावरोहतीति । नहि कारणव्यतिरेकेण कार्य्यस्य स्थितिर्न्याय्येति । तदुक्तम्—

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥
वायुः प्रलीयते व्योम्नि

इति प्रतिकल्पं भूतानामुत्पत्तिप्रलयावनुलोमविलोमाभ्यां भवतः। आत्मादिरुत्पत्तिरात्मान्तश्च लयः सेन्द्रियस्य मनसो बुद्धेश्च सद्भावः सिद्धः

बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुः इति

नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः १७ अस्ति आत्मा जीवाख्यः पञ्जरयुक्तपक्षिन्यायेन शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी स किमुत्पद्यते नवेति विचार्य्यते। अपहतपाप्मत्वादिधर्मक आत्मा तद्विपरीतश्च जीव इति भेदवादे विभक्तत्वादाकाशादिवदस्य विकारत्वसिद्धिः। यावान्हि आकाशादिः प्रविभक्तः स सर्वोऽपि विकारः समधिगतो जीवात्मापि पुण्यापुण्यसुखदुःखादियुक्तप्रविभक्त उपलभ्यत इति तस्य प्रपञ्चवदेवोत्पत्तिर्भवितुमर्हतीति। तथा च श्रुतिः—"यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेमात्मनः स्मादात्मनः सर्वप्राणाः व्युच्चरन्ति। यथा सुदीप्तात्पावकाद्विस्फुलिङ्गा सहस्रशः प्रभवन्ते सरूपाः तथाक्षराद्विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियन्तीति अस्मादप्युदाहरणाद्दोषेभ्यो रोगाणामागतिः। मनसा चैतद्विचार्य्यम् मनश्च वहिः प्रमाणान्तराधीनं परतन्त्रं वहिर्मन

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति न्यायात् । एतत्तत्वविवेकः सर्वज्ञदूषणप्रस्तावे मण्डनमिश्रै-रप्यभिहितः । शुक्तौ रजतज्ञानस्येन्द्रियकत्ववादी वक्तव्यः । किन्तन्मानसमुत वहिरक्षजमिति नात्र मनसो वहिरर्थैः संबन्धः परतन्त्रं मन इति न्यायात् परस्परविरोधे हि न प्रकारान्त-रस्थितिरिति च परस्परप्रतिस्पर्धिनोरन्यतरनिषेधेऽन्यतरव्य-वस्थेति । तथा प्राणाः, यथाग्नेर्ज्वलतश्क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेव तमादात्मनः सर्वे प्राणाः ।

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।

संख्याविप्रतिपत्तिश्च इति

प्राणो दृश्यते । सप्त प्राणाः प्रभवन्ति इति स प्राणमसृजत् प्राणाच्छ्रद्धाम् । एवं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम् । सप्तगतेर्विशेषितत्वाच्चेति क्व-चिदष्टौ प्राणा ग्रहत्वगुणेन कीर्त्यन्ते । अष्टौ ग्रहा, अष्टा-वतिग्रहा इति क्वचिन्नव सप्तैव शीर्षण्याः प्राणा-द्वाववाञ्चौ तैत्तिरीयाः क्वचिद्दश, नव वै पुरुषे प्राणा नाभिर्दशमी इति क्वचिदेकादश, दश वै पुरुषे प्राणा आत्मा एकादशः सर्वेषां स्पर्शानां त्वगेकायनम् । क्वचित् त्रयोदश, चक्षुश्चद्रष्टव्यञ्चेति एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः । किन्तावत्प्राप्तं लाघवात्सप्तसंख्याध्यवसानमिति वृत्तिभेदापेक्षञ्च संख्यान्तरश्रवणमिति मन्यते । 'यथोद्देशं संज्ञापरिभाषमिति यथाकार्यं संज्ञा मन्तव्येति तदर्थः अण-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वश्च अणवश्चैते प्राणाः प्रतिपत्तव्यः। अणुत्वञ्चैषां सौक्ष्म्य-परिच्छेदो न परमाणुतुल्यत्वम् कृत्स्नशरीरव्यापि कार्य्या-नुपपत्तिप्रसङ्गात्। सूक्ष्मा एते स्थूलाश्चेन्मरणकाले शरीरान्निः-सरन्तः पार्श्वस्थैर्बिलान्निःसरन्नहिरिव समुपलभ्येरन्निति। श्रेष्ठश्च प्रथमः श्वासः प्राणः स वायुरित्येकः पक्षः। वायुः पञ्चविधः प्राणोऽपानो व्यानः समान उदान इति स करण-व्यापार इति पक्षान्तरम्।

सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चैति चोक्तेः।

अत्रोच्यते "न वायुः पृथगुपदेशात्" इति वायोः पृथक् प्राणस्योपदेशान्न तत्त्वमिति अकरणत्वाच्च नहि चक्षुरादि-वद्विषयपरिच्छेदकत्वलक्षणं करणत्वमभ्युपगम्यते न चायं निष्प्रयोजनः प्राणसंवादेऽन्यत्रासम्भाव्यमानकार्य्यदर्शनात् तथाचौपनिषदी वार्ता श्रूयते अथ ह प्राणा अहं श्रेयसे व्यूदिरे इत्युपक्रम्य यस्मिंश्चोत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ इति संदर्भेण छान्दोग्ये आत्मनः सिद्धिप्रकारः तस्य च नित्यत्वात्।

तस्य शारस्यामन् शरीरे भोक्तृत्वेन नित्यत्वम् पुण्यपापो पलेपसम्भवात्सुखदुःखभोगसम्भवाच्च। न देवतानां, ताहि पर-स्मिन्नैश्वर्य्येऽवतिष्ठमाना न हीनेऽस्मिन् शरीरे भोक्तृत्वं लब्धु-मर्हन्तीति। श्रुतिश्चात्रभवति पुण्यमेवामुं गच्छति न ह वैदोवान् पापं गच्छति" इति बृ० १।५।२ शारीरेण च नित्यः प्राणानां संबन्धः। उत्क्रमणे प्यनुवृत्तिदर्शनात्। तथाच श्रुतिः "तमुत्का-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्तं प्राणो नोत्क्रामति तमनुत्क्रामन्तं सर्वे प्राणा, अनुत्क्रामन्ति अपिच 'उभयगतिरिह भवति"। इह संसारे। तदुक्तम्।

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेणेति।
संसरति निरुपभोगं भावैरधिवासितं लिंगमिति च॥

अपिच मांसादिभौमं यथा शब्दमितरयोश्च" पुरुषेणोपभुज्यमानानां यथाशब्दं कार्य्यमुत्पद्यते। तदुक्तम् "अशितमन्नं त्रेधा विभज्यते यः स्थविष्ठस्तत्पुरीषम्भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मल इति। एवमितरयोरप्तेजसोर्यथाशब्दं कार्य्यमवगन्तव्यम्। मूत्रं लोहितंप्राणश्चापाम् अस्थि मज्जा वाक् तेजस इति त्र्यात्मकत्वात्तुभूयस्त्वात् २-३-२ तु शब्दः शंकानिवृत्त्यर्थः। त्र्यात्मिका हि आपस्तास्वभ्युपगतासु इतरदपि भूतद्वयमवश्यमभ्युपगन्तव्यम्। त्र्यात्मकश्चदेहस्त्रयाणामपि तेजोवन्नानामिहोपलब्धेः। पुनश्च त्र्यात्मको देहस्त्रिधातुत्वात् त्रिभिः वातपित्तश्लेष्मभिः। नहि भूतान्तरं प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते तस्माद्भूयस्त्वापेक्षोऽयमापः पुरुषवचस इति व्यपदेशः प्रश्नप्रतिवचनयो रपशब्दो न कैवल्यापेक्ष इति सर्वदेहेषु रसलोहिता द्रवद्रव्यभूयस्त्वं दृश्यते। ननु पार्थिवधातुरपि भूयिष्ठ उपलभ्यते। नैष दोषः। इतरापेक्षयाप्यपां भूयस्त्वं भविष्यति दृश्यते-च शुक्रशोणितलक्षणे च देहवीजे द्रववाहुल्यम्, कर्म च निमित्तकारणं देहान्तरारम्भे कर्माणि चाग्निहोत्रादीनि सोमाज्य-



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पयःप्रभृति द्रवद्रव्यव्यपाश्रयाणि कर्मसमवायिन्यश्चापः श्रद्धा-शब्देरिताः सहकर्मभिर्द्युलोकाख्येऽग्नौ हूयन्ते इति वक्ष्यति तस्मादपां बाहुल्यप्रसिद्धिः। आर्द्रं वस्त्रं समन्ताद्वाता नीतं रेणुजातमुपादत्ते इति न्यायात्। यथा च निष्टप्ताऽयःपिण्डे निक्षिप्तं जलं समन्ताद्गृह्णाति यथा च कषायोष्णो जीवो योगा-नीतं कर्म समन्तादादत्ते। दर्शनाच्च। २० चतुर्विधे भूतग्रामे जरायुज स्वेदजोद्भिज्जाण्डजलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्ममुत्पत्तिदर्शनादाहुतिसंख्यानादरो भवति। एवं-मन्यत्रापि भविष्यति। तेषां भूतानां त्रीणि बीजानि भव-न्तीति त्रिविधभूतग्रामः। क्वचिच्चतुर्विध इति प्रतिज्ञातम् तत्र प्रतिनिधिन्यायेन च नित्यकर्मणोऽनित्य प्रारब्धकर्मणश्च प्रतिनिधिना समापनम् भोजनलोपेऽप्यद्भिर्न्यायेन वा द्रव्येणा-विरुद्धेन प्रतिनिधिना प्राणाग्निहोत्रस्यानुष्ठानम्। तदाह— आहारादलोप इति ४० छान्दोग्ये श्रूयते तद्यद्भक्तं प्रथममागच्छेत्त द्धामीयं स यां प्रथमाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा इत्यादि पञ्च प्राणाहुतयो विहितास्तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः। य एतदग्निहोत्रं विद्वान् अग्निहोत्रं जुहोति स यथेह क्षुधिता बाला मातरं पर्य्युपासते एवं सर्वाणि भूतानि अग्निहोत्रमुपासते इति।

अत्र विचार्य्यते किं भोजनलोपे लोपःप्राणाग्निहोत्रस्योता-लोप इति तद्भक्तमिति भक्तागमनसंयोगश्रवणाद्भक्तागम-नस्य भोजनार्थत्वाद्भोजनलोपे लोपः प्राणाग्निहोत्रस्य प्राप्नोति

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तथापि भोजनालाभे अन्नप्रतिनिधिना समानगुणप्रदवस्तुना अविरुद्धे न भोजनसमापनेनाग्निहोत्रो विधेयस्तद्विधाने दोषेभ्यो रोगस्योत्पत्तिर्दोषदुष्टविकारस्याधिकन्यूनातिरेकस्योत्पत्तिविनाशस्य स्मरणम् । सप्रयाजना च सृष्टि ।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति न्याया-त्किमपि प्रयोजनमुद्दिश्यैव सृष्टिः प्रवर्तते प्रजापति

र्निष्प्रयोजनायां प्रवृत्तावप्रेक्षापूर्वकारित्वादुन्मत्ततुल्योऽसौ भवेत् । तदुक्तम्-

निमित्तेभ्यः प्रवर्तन्ते सर्वएव स्वभूतये ।
अभिप्रायाऽनुरोधेऽपि स्वार्थस्यैव प्रसिद्धये ॥

इति अभिप्रायानुरोधे आद्यक्षणे घटो नीरूप इत्यादि प्रतीतिर्नस्यात् । अस्मिन् पक्षे सामान्याभावो न सिद्धेत् । प्रागभावाऽभ्युपगमेऽपि तुल्यमेतत् । सामान्याभावप्रागभावयोः सुन्दोपसुन्दन्यायेन परस्परपराहततत्वात्प्रागभावसिद्धौ विशेषाभावसिध्या सामान्यधर्मावच्छिन्नप्रतियोगिताकसामान्याभावसिद्धिः तत्सिद्धौ च विशेषप्रतीतिमात्रशरणप्रागभावासिद्धिरिति । न तदुभयं विपाश्चितां चेतसि चमत्कारमावहतीति । रूपं वायुवृत्ति न वा वायू रूपवान् नवेति रुपाभावासन्देहात् । निश्चिते संशयायोगात् यावद्विशेषाभावादन्यसामान्याभावासिद्धिः तदुक्तं निर्विशेषं न सामान्यमिति । अतस्तावन्त्येव रूपाणीति निश्चयदशायामेतादृशसंशयायोगात्तादृशनिश्चयदशायामेवैतादृशसंशयोवाच्यस्तथा च रूपत्वं पार्थिवाप्यतैजसरूपत्रितयातिरिक्तवृत्ति भविष्यति प्रतिबन्धकल्पने मानाभावात्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उक्तसम्भावनाविरहदशायां कृतनिश्चयस्यैव प्रतिबन्धकत्वात् यादृशविशेषाभावेभ्योऽतिरिक्तः सा सामान्याभावस्य कोटिः, थताच रूपसामान्यमपि यावद्विशेभ्योतिरिक्तं संशयकोटि नभ्युपगन्तुं शक्यते। तथाच कथं रूपस्य संशयकोटित्वं सर्व-रूपाभावनिश्चयात् रूपासंशय इति।

अतो न सत्किञ्चिदभावमादाय नीरूप इति ब्रूषे प्रतीति-प्रसङ्ग इति। धार्मिकल्पनातो धर्मकल्पनाया लघुत्व मितिन्याथात्। नहि धारावाहीकेषु तुल्यसामग्रीकेषु अनुभवेषु स्मरण-व्यवहारः। तथाच धारावाहिज्ञानमनुभव एव परामर्श इति, ज्ञानप्रसङ्गात्।

## सम्प्रति—भ्रमो निरूप्यते

न च दोषाणां स्वाश्रयएवातिशयहेतुत्वेन चक्षुर्जन्यदोषजन्यो भ्रमः कथमचाक्षुषः स्यात् अन्यथा त्वचा गृहीते शंखे चक्षुषा गृहीते रूपसादृश्ये च निमीलितचक्षुषोऽपि पीतभ्रमरूप्यभ्रमयो-रापत्तिरिति दोषाणां स्वाश्रय एवातिशयजनकत्वमित्यस्येवा-सिद्धेर्नियामकाभावात्। नचोक्तातिप्रसङ्गो नियामको भ्रमकाले विषयैक्यग्रहनियमवत् न ज्ञानैक्यग्रहनियमस्तं विनापि प्रवृत्याद्युत्पत्तेः। तच्च भ्रमज्ञानविषयभूतं द्विविधं व्यावहारिकसत्, प्रातिभासिकसच्चेति प्रागव्यावहारिकसत्त्व-विषयत्वात्प्रत्यक्षं नागमबाधकमिति परमार्थसत्वमादाय त्रिविधं सत्त्वं भ्रमविषयस्य विधाद्वयम् ब्रह्मणि जगद्भ्रम-मादाय व्यावहारिकं सत्त्वं शक्तौ रजतभ्रममादाय प्रातिभासिकसत्वमिति।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



"ब्रह्मणो ज्ञानत्वादेरुपपत्तिः" किं नाम ब्रह्मैवैकं ज्ञानात्मकमानन्दात्मकमद्वितीयं नित्यं साक्षिवेति नोपपद्यते। तथाहि तत्र तावद् ज्ञानत्वं किं जातिविशेषो वा साक्षाद्व्यवहारजनकत्वं वा जडविरोधित्वं वा जडान्यत्वं वा अज्ञानविरोधित्वं वा अर्थप्रकाशकत्वं वा परांगीकृतं वा। नाद्यः वृत्तिप्रतिविम्बितज्ञानाभासे तत्सम्भवेऽप्यखण्डरूपब्रह्मज्ञाने तदभावात्। न द्वितीयः फलोपधानस्य सुषुप्तादावभावात् शक्त्यादिरूपस्वरूपयोग्यताया अपि मुक्तावभावात्। न तृतीयः स्वरूपज्ञानस्य नित्यत्वेन तद्विरुद्धस्य नित्यनिवृत्त्यापातात्। न चतुर्थः सत्यंज्ञानमित्यादावनृतव्यावृत्तेरार्थिकत्वोक्तिविरोधात्। न च पञ्चमः अज्ञानस्य नित्यनिवृत्यापातात्। न षष्ठः—मोक्षेऽन्यार्थोल्लेखाभावात् स्वरूपोल्लेखे स्वविषयत्वापातात्। न सप्तमः परांगीकृतजातेर्व्यवहारहेतुत्वादे र्वा त्वन्मतेऽसम्भवात्। मैवम् अर्थप्रकाशकत्वमेव ज्ञानत्वम्। अतएव अर्थप्रकाशरूपत्वं ज्ञानत्वं ब्रह्मणः कथम् अन्यार्थाभावतो मोक्षे स्वेन स्वस्याप्यवेदनात् इति निरस्तम्। आनन्दत्वं जातिविशेषो वा अनुकूलवेदनोयत्वं वा अनुकूलत्वमात्रं वा दुःखविरोधित्वं वा दुःखाभावोपलक्षितस्वरूपत्वं वा पराङ्गीकृतं, वा नाद्यः अखण्डस्वरूपे आनन्दे तदभावात्। न द्वितोयो मोक्षे वेदितुरभावात् आत्मनोऽवेद्यत्वाच्च। किंचानुकूल्यं किञ्चित्सापेक्षं—न चान्यं प्रति तद्युक्तमिति—स्वं प्रत्येव वक्तव्यत्वेन सविशेषत्वापातात् अतएव न तृतोयादि। विज्ञानमानन्दं ब्रह्मेत्यादौ

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



दुःखव्यावृत्तेरार्थिकत्वोक्तिविरोधात्। वैशेषिकमोक्षे त्वदुक्तस्य दुःखाभावे सत्यपि आनन्दाभावेनापुरुषार्थत्वस्य त्वन्मोक्षेप्यापातात्। नापि षष्ठः परांगीकृतस्य निरूपाध्यनुकूलवेदनीयत्वादेर्निरुपाधिकेष्टत्वरूपत्वात्। न च दुःखाभावेऽतिव्याप्तिः, दुःखस्याभावस्यापि सुखशेषभावात्। अभावस्य विरोधिभावान्तरत्वाऽभ्युपगमात्। न च मुक्ताविच्छापाये आनन्दापायापत्तिः। ज्ञानपूर्वकत्वादिच्छायास्तत्पूर्वकत्वादानन्दप्राप्तेस्तदभावे तदभावौचित्यात्।

मैवम् ज्ञानानन्दयोर्भेदोऽभेदावा आद्ये सखण्डत्वापत्ति द्वितीये आनन्दपदवैयर्थ्यम्, ज्ञानानन्दयोर भेदेऽपि कल्पितजातो भेदनिबन्धनप्रवृत्तिकतया पदद्वयप्रयोगस्य व्यावृत्तिभेदेन साफल्यात्। एवञ्चानन्दत्वस्य सुनिरूपतया न तन्यायेन जगतः सत्वापादानमिति। यच्च सुखादेः स्वानन्तरभाव्यविद्यावृत्तिप्रतिफलितचिद्वेद्यत्वे ज्ञानैकसत्वा योग स्तन्न मानसत्व वादिमतेऽप्यस्य समानत्वात् नहि तन्मते ज्ञानैकस्थितिकत्वाऽतिरिक्त ज्ञानैकसत्वमस्ति। दुःखादिसमसमयोत्पन्नवृत्यापि ज्ञानैकसत्वोपपत्तेश्च तस्मात् ज्ञानानन्दैकरूपमद्वितीयं नित्यं साक्षि च ब्रह्मेति सिद्धम्।

ननु निर्विशेषं ब्रह्म कथं तदेव निमित्त मुपादानञ्चेति जगतोऽभिन्ननिमित्तोपादानकत्वम् विकारवत्कारणस्यैवोपादानत्वात् ब्रह्मणोऽविकारत्वात्। तथा च श्रुतिः 'निर्विकारा हरः शुद्धः" इति। अत्रोच्यते परिणामितयो पादनत्वाभावेऽपिविवर्त्ताधि-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ष्ठानतयोपादानत्वसम्भवात् विवर्त्ताधिष्ठानत्वञ्च विवर्तकारणा-ज्ञानविषयत्वमेव । तदुक्तं वार्तिककारैः ।

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते ॥

इति नचोपादानलक्षणायोगः आत्मनि कार्य्यजनिहेतुत्वस्यै-वोपादानलक्षणत्वात् । परिणामारम्भवादिमतसाधारणत्वात् । अथवा मायाशक्तिमद्ब्रह्मोपादानम् निर्विकारश्रुतिस्तु तदनुपरक्त-ब्रह्मविषये विवक्षिता अथवा मायाद्वारा ब्रह्म कारणम् । अंशु-रिव तन्तुद्वारा पटं प्रति निर्विकारश्रुतिः । अद्वारकविकार-निषेधिकेति विवक्षितम् । नच रक्तपीतसितासितसूत्रारब्ध पट इव रक्तादिमयं जगत् । पारमार्थिकत्वनिवर्तनीयत्वया-रापातात् तन्मात्रोपादानकत्वस्य तत्तत्सत्वप्रयोजकत्वे अनिर्वा-च्यवस्यापि धीमात्रस्थत्वाऽऽपातात् । तन्मात्रोपादानकत्वा-भावात् । ब्रह्मणो मायाख्यहेतूपरागमपेक्ष्य विकारित्वे मृदादि-वत्परिणामित्वापत्त्याऽब्रह्मत्वे ब्रह्मकारणत्वासिद्धिः । उभयापरि-णामित्वेन तयाः कारणत्वाङ्गीकारात् नच त्वत्पक्षोक्तदाषावकाशः उभयोः परिणामित्वे कारणत्वानङ्गीकारात् किञ्च नहि व्यव-हाराभावमात्रेण वस्तुव्यतिरेकः । वृक्षादिषु पृथिवीत-व्यवहाराभावेऽपि पृथिवीत्वसत्त्वात् । यत्तु मायोपादानमीश्वरो निमित्तं शुद्धं ब्रह्माधिष्ठानमभिन्ननिमित्तोपादानत्वाभावेन त्वन्मते तदर्थस्यैव प्रकृत्याद्यधिकरणादेरनुपपत्तिरिति तन्न एकस्यैवा विद्योपहितत्वेनोपादानत्वस्याविद्यापरिणामेच्छा-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृत्याद्याश्रयत्वेन निमित्तत्वस्यापि सम्भवात् । ब्राह्मणोविश्व-कर्तृत्वादेव रोहणाचललाभेन रत्नसम्पदइव परमेश्वर-तालाभे सर्वसम्पदां सम्पत्तिरिति किमन्यत्प्रार्थनीयम् । उक्तञ्च भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम् । एनया वा दरिद्राणां किमन्यदुपयाचितम् । एवं कुलालादिवदुपादान गोचर प्रयत्नादिमत्वं कर्तृत्वमुक्तम्भवति तच्च कार्य्यस्य कल्पि-तत्वेन घटते कुलालादेरकल्पितं प्रत्येव कर्तृत्वदर्शनात् त्वन्मते-ऽपि सर्वज्ञकर्तुरसिद्धयापत्तेः । एतेनाधिष्ठानत्वं न कर्तृत्व मित्यपास्तम् तथा सत्यनतिरिक्तोपादानकत्वाभावेन कर्तृ-त्वोपादानत्वयोः समानाधिकरणयोक्त्ययोगात् नापि भ्रान्त-वदध्यासद्रष्टत्वम् भ्रान्तस्य प्रेक्षापूर्वकसमारोपितकर्तृत्वस्या-भावात् नापि मायाविवद् व्यामोहकत्वमेव कर्तृत्वम् जीवा-दर्शने व्यामोहकत्वाभावात्—तद्दर्शनेभ्रान्त्यापत्तेः पत्तत्रयञ्च जन्मादिसूत्रेऽर्थलब्धसार्वज्ञत्वादिस्फुरणार्थम् "शास्त्रयोनि-त्वात" मायावित्वेऽपि स्रक्ष्यमाण मायिक विश्वाकारमाया-सत्वांशपरिणामाधारतया सार्वज्ञलाभात् तस्माद्ब्रह्मणो-निमित्तत्वमुपादानत्वञ्च सिद्धम् । तदिदमभिन्ननिमित्तोपादानत्वं सूत्रश्रुतिसिद्धम् तथाच पाणिनिसूत्रम् "जनिकर्तुः प्रकृतिः" श्रुतिश्च "यतो वा इमानि भूतानि जायन्ते" इति स्थिति-लयाधारत्वलिङ्गादुपादानत्वमीक्षणाद्याश्रयत्वाच्च कर्तृत्वं, यथा लोके गोलोमाजलोमाविलोमभ्यो दूर्वा जायन्ते । लोमादीनां दूर्वादीन् प्रत्यवधित्वम् तथा चात्मनः सर्वकार्य्यावधित्वं

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



"सोऽकामयत" इति शाखान्तरसम्मतश्च स तपस्तप्त्वा इदं सर्वमसृजत् तत्सृष्ट्वा तदेवानुप्राविशदिति तदनुप्रविश्य सदादिभवनस्य जगत्सृष्टितदनुप्रवेशान्तरभावित्वेन सतो जगत् सृष्टत्वानुपपत्तौ प्रमाणमिदमुपतिष्ठते असद्वा इदमग्र आसोत्ततो वै सदजायत तदात्मानं स्वयमकुरुत इति तदात्मानं सृजाम्यहं धर्मसंस्थापनार्थायेति ब्रह्मस्वरूपेण सदपि कार्य्यरूपेण पूर्वमसत्यश्चासदिति सदसद्व्यपदेशः। ऊर्णनाभिन्यायेन चैतत्सिध्यति यथोर्णनाभिस्तन्तून् स्वतः सृष्ट्वा स्वस्मिन् समावेशइति। तद्वद्ब्रह्म जगदिति सर्वं खल्विदं ब्रह्म इति समानाधिकरणश्रुतिश्च प्रमाणमेकविज्ञानेन सर्वविज्ञानवचनादनुमानाच्च महाभूतानां सत्कार्य्यत्वं तथा चानुमानम् महाभूतानि सद्वस्तुप्रकृतिकानि सदात्मना प्रतीयमानत्वात् यद्वस्तु यदात्मना प्रतीयते दत्तत्प्रकृतिकम् यथा तन्तुकपालस्वभावानुरक्तं पटघटादि तत्तत्प्रतीकमिति व्याप्तिसिद्धिः। नच सत्प्रधानप्रकृतिकत्वेनार्थान्तरं व्याप्तिपक्षधर्मतयोः साम्येपि श्रुत्यनुग्रहेण स्थापनाया बलवत्वात्। प्रेक्षापूर्वकत्वात्कार्य्यत्वाच्च जगदभिन्ननिमित्तोपादानमिनि हेतुद्वये तात्पर्य्यम्। अस्मन्मतेऽन्तःकरणस्य परिणाम्युपादानत्वेपि तद्रूपेण परिणता ज्ञानाधारतया विवर्तोपादनत्वस्यानपायात्। सर्वकार्य्यनिमित्तकालसंयोगस्योभयवादिसम्मतदृष्टान्तस्य लाभाच्च कुलाल वच्च कर्तृत्वं प्रत्यनुमानन्तु श्रुतिविरोधेन हीनबलम् तस्माज्जगदभिन्ननिमित्तोपादानमिति सिद्धम्।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सम्प्रति भूतानां सृष्टिकारणत्वं कीदृगिति विचार्य्यते ॥

तेजोवारिमृदां यथा विनियम इति व्यासवचनं हन्ताह मिमास्तिस्त्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतिवचनञ्च भूतानां सृष्टिकारणत्वे प्रमाणम् श्रुतौ नामरूपे व्याकरवाणीति तां त्रिवृतंत्रिवृतमेकैकां करवाणीति व्याकरणत्रिवृत्करणे समानकर्तृके प्रतीयेते। त्रिवृत्करणञ्च हिरण्यगर्भरूप समष्टिजीवकर्तृकं भवितुमर्हति तत्स्रष्टाण्डान्तर्वर्त्यग्न्यादिषूपदेशात्। यदग्नेर्लोहितंरूपं तेजसस्तद्रूपमित्यादि। तदेककर्तृकं प्रतीयमानं नामरूपव्याकरणमपि तत्कर्तृकमेवप्राप्तं तमिममाक्षेपं समाधत्ते। तेजोवारिमृदां यथा विनिमय इति विनिमयः परस्परं मिश्रीकरणम्। यतोब्रह्मणः परमात्मानो यथा विनिमयः तथा त्रिसर्गौयत्र मृषा यत्र भगवती मृषा पूर्वाप्राप्तप्रयोजनप्रापको न भवति। कथन्तर्हि प्रवृत्तिरिति चेत—लीलार्थमिति ब्रूमः तदुक्तम्।

ईशस्यैष स्वभावोऽयं प्राप्तकामस्य का स्पृहा।

लोकवत्तु लीलाकैवल्यमिति जीवेश्वरजडानां सर्गस्त्रिसर्ग इति वा यथैकमेव मूलभूतं तेजः पार्थिवादि स्वकार्येषु बहुधाभूता प्रविश्य मंथनादिना वहिराविर्भवति। तथेश्वरो जगत्स्रष्टा बहुरूपोभूत्वान्तः प्रविश्य वहिश्च भूतानुकम्पया वासुदेवादिरूपेणाविर्भवतीति। अयमीश्वरसर्गः दीपाद्दीपान्तरोत्पत्त्पत्तिवद्वा ईश्वरसर्गः। यथा सूर्य्यादितेजसां जलाद्युपाधिकानि वहूनि सूर्य्यकादिप्रतिविम्बाति यथैव सूक्ष्मस्थूलशरीरो-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पाधिका हरेः प्रतिबिम्बभूता जीवाइति जीवसर्गः। यथा कुम्भाकार पुस्तकादौ मृदमुपादानमादाय घटखर्वटपुस्तादीनि सृजतस्तथेश्वरो जडप्रकृतिमुपादाय महदहंकाराद्यशेषजडवर्गानिति जडसर्गः। अनेन जगतो मायामयत्वे किमायातमितिचेत्। यत्रेश्वरे इति विशेषणादन्यत्र मृषा न भवति। तथोक्तविनिमयोऽप्यर्थक्रियायोग्यत्वाद् व्यवहारे सदसद्विलक्षणो न भवति। वस्तुतस्तु तेजःकार्य्यं केशोण्डकादि, वारिकार्य फेनादि, मृत्कार्य्यं घटादि, सर्वं जगन्मिथ्या। तदुक्तम् "वाचारम्भणं विकारो नामधेयमिति। अनुमानञ्च विमतं मिथ्यादृश्यत्वाच्छुक्तिरजतवदिति मायामयी सृष्टिरिति सिद्धम्। स्कान्देऽपि

पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत्।
विष्णुरेको विभर्तीदं नान्यस्तस्मात्त्वमो धृतौ इति।

प्र० २० शरीरे चैतन्यमात्मजन्यं भूतसंयोगजन्य वेति विचार्य्यते।

बहूनामनुग्रहो न्यायेन इति आत्मन इति पक्षः समायाति। आत्मा हि स्वकर्मक्लेशनोदितो गर्भमापद्यते कर्माणि पूर्वजन्मार्जितानि शुभाशुभफलानि क्लेशा अविद्यास्मितारागद्वेषाऽभिनिवेशा इति न क्लेशरहितः तदुक्तम्—क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः। सति मूले तद्विपाको जात्यायुर्भोगाः। वीतरागजन्मादर्शनादिति।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रमाणवन्त्यदृष्टानि कल्पयानि सुबहून्यपि ।
बालाग्रशतभगोऽपि नकल्प्योनिष्प्रमाणक इति ॥

नचानेकानिष्टकल्पनाभयान्मुख्यार्थपरित्यागोन्याय्यः । प्रमाणसिद्धे नियोगम्यर्थनुयागानुपपत्तिरिति । श्रुतिसिद्धयर्थमश्रुतोपलब्धौ यत्नवता भाव्यम् नतु श्रुतिशैथल्यमादरणीयम् । एतेनोभयपदलक्षणा स्वीकारे गौरवदोषा निरस्ता वेदितव्य इति प्रमाणिकमदृष्टमपि स्वीकरणीयम् । तदुक्तम्

"प्रामाणिको निषेधश्चेद् भेदोऽप्रमाणिकस्ततः ।
भेदस्यापि निषिद्धत्वात् श्रुतिभंगोऽन्यथाभवेदिति ॥

सर्वभूतकारणं सत्वरजस्तमो गुणा प्रकृतिर्मातुराहारादिलमुत्पन्नचमरकसुरभिवासितपुद्गलः प्रविशति खादयश्चेतना धातुः प्रतिशरीरं स्वप्नशीलो महानिर्वाणसमये यदवशिष्यते शक्तिमद्ब्रह्म सा चेतना शक्तिर्मूलप्रकृतिः सर्वात्मचैतन्यकारणि चेतना धातुरव्यक्ताख्य आत्मा खादयः पञ्च महाभूतानि । शब्दतन्मात्रादाकाशः स्पर्शतन्मात्राद्वायुः रूपतन्मात्रादनिलो रसतन्मात्रादापो गन्धतन्मात्रात्पृथिवीति षड्धातुकः पुरुषा लोके विश्वरूपः । सप्ताङ्गो मुण्डके वर्णितः । अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायु प्राणो हृदयं विश्वमस्य पादा पृथवी ह्येष सर्वभूतान्तरात्मा" इति । एवं बहूनि प्रमाणान्यनपेक्षितत्वेन त्यज्यन्ते । तथा गर्भोपनिषदि मार्कण्डेयपुराणविष्णुधर्मोत्तरब्रह्माण्ड

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वायुपञ्चस्कन्धेषु समानासमान न्यायेन वर्णितानि तथां च

पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम् ।
तं सप्तधातुं त्रिमलं द्वियोनिं चतुर्विधाहारमलंशरीरमिति ।

तदिदं शरीरं पञ्चात्मकं पृथिव्यादि पञ्चभूतरचितत्वात् मलादीनां धारणात् शरीरं धातुः तत्र धारा धारणे, जलं पिण्ड-विधाने तेजःप्रकाशने, वायुर्व्यूहने, आकाशमवकाशप्रदाने, शुक्रशोणितसंयोगादार्तवमावर्तते, गर्भो हृदि व्यवस्थां नयति हृदयेऽन्तराग्निः । अग्निस्थाने पित्तं पित्तस्थाने वायुर्वायो-र्हृदयमिति एतेनैका क्रिया द्व्यर्थकरी प्रसिद्धा इति न्यायेन दोषादीनां स्थापना सिध्यति तदुक्तम्

वाच्यान्यथोपपत्तिर्वा त्याज्योवा दृष्टताग्रहः ।
नह्येकत्र समावेश शङ्कायातपवदेतयोरिति ॥

लौकिकपदार्थत्यागे पारिभाषिकत्वापत्तेरिति भवतु वा प्रमाव्यवहारः सकल लोकसिद्धस्तदसमर्थनेच कथं तान्त्रिकता

यत्राभयोः समोदोषः परिहारोऽपि वा समः ।
नैकः पर्य्यनयोक्तव्यस्तादृगर्थविचारणे ॥

इति न्यायापायात् वितण्डावादिनम्प्रति एवं पर्य्यनुयोगानव-काशात् । त्वाया स्थाप्यं मया दूष्यमिति सयमः कथारम्भे कृत स्तथापि शिष्यभावेन पृच्छतः किमुत्तरमिति चेत्

समस्त लोक शास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
कातदातु गतिस्तत्रवस्तुधीव्यवहारयोः ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपपादयितुं तै स्तैर्मतैरशकनीययोः ।
अनिर्वचनतावादपादसेता गतिस्तयोः ॥

इतिन्यायेन प्रमाण तत्व मनिर्वचनीयं तदादाय सर्वोपि व्यवहारः। तत्वमस्यादिवाक्यस्य च प्रामाण्यम् त्वंकारोपहितस्य प्रमातुः समुत्पन्नं विज्ञानं साक्षात्कारापरनामकमन्तः करणवृत्तिभेदरूपं निरुपाध्यखण्डानन्तानन्दज्ञानात्मविषयकं जीवपरयोरैक्यावगाहिपारमार्थिकप्रमारूपं तदेतत्तात्विकं प्रमाणम्। विस्तरस्तु पुराणे संगृहीतः तथा च मात्स्ये मनुम्प्रति-मत्स्यवचनम्—" सत्वं रजस्तमश्चेति गुणत्रयमुदाहृतम्" इत्यादि १४ श्लोकात् २२ पर्यन्ते ।

ईश्वरच्छावशः सोपि जीवात्मा कथ्यते बुधैरिति ।
आत्माभेदमजानन्तः स्वतः सिद्धं मुमुक्षवः ।
मा भूवन्न फलायासा इत्यपेद उदीरितः ।

एतावता प्रबन्धेन चैतन्यमात्स्यजन्यं महाभूतविकारेभ्य इन्द्रियेभ्यश्च सिध्यति। येषां मते चतुर्विधा योनिरस्ति तन्मते महाभूतेभ्यो जंगमस्थावराणामुत्पत्तिरिन्द्रगोपमण्डूकगण्ड पादानां च सर्वमेतद् ब्रह्मशक्तिप्रदर्शनाय स्थालीपुलाकन्यायेन प्रदर्श्य रङ्गदर्शननिवृत्तनर्त्तकीन्यायेन विरम्यते ।

प्रथमपक्षे ब्रह्मणो निमित्तत्व मुपादानत्वं द्वयोः। द्वितीय पक्षे ब्रह्मणः प्राधान्यं मायाया अप्राधान्यम्। तृतीय पक्षे मायाया उपादानत्वम् ब्रह्मणस्तदधिष्ठानत्वमिति विवेचितम्। नहि

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



निमित्तोपादानताभ्यां विना कार्य्यमाश्रयन्ति कुशलाः ॥

अथेदानीं पञ्चमहाभूतविचारप्रयोजनं किमिति चिन्त्यते। यदसंन्दिग्धमप्रयोजनञ्च नतद्विचारमर्हति यथा लोकवर्त्ती समनस्केन्द्रियसन्निकृष्टोघटः करटकदन्तश्च त दिदं भूतपञ्चकं किंकारणकं किंदैवतञ्चेति। सन्दिग्धं स्वात्मक-देहादि-रक्षणा-दिना सप्रयोजनञ्चेति विचारमर्हति। कारणे सन्देहश्च कुत-एषां समुत्पत्तिः कःकर्ता स्वभावसिद्धः परिणामाविवर्तोवेति महाप्रलते पृथिव्यादिक्रमेण लीयमानं जगत् सद शिवे ब्रह्मणि लीयते शेत्तेऽस्मिन् जगदिति शिवइति निर्वचनात्। सच शिवः कारणत्वाज्जगद व्याप्नुवन् वेवेष्टि व्याप्नोतीति विष्लृव्याप्ता-वितिधात्वर्थानुगमात् विष्णुरित्युच्यते। तथैव हरिहरशब्दे अ इ प्रत्यय भेदेपि हृइति प्रकृत्यैक्याच्च विष्णुरित्युच्यते तदुक्तम् "योवै विष्णुः सवैरुद्र इति यदभिधित्सितं तदभि-धीयतां फलेव्यक्ति र्भविष्यतीति न्यायेन शब्दभेदेप्यर्थाभेदात तदुक्तम् "निःश्रेयसफलं प्राहु र्येषां तत्त्वावधारणम्।

प्रमाणादपदार्थास्ते लक्ष्यन्ते नातिविस्तरमिति

प्रेक्षावत्प्रवृत्तेः प्रयोजनज्ञानाधीनत्वेन निःश्रेयसं प्रयोजन मादाय विचारे प्रवृत्तिसम्भवात् तदिदं भूतपञ्चक मेव विचारमर्हति इति।

कार्य्यकालं संज्ञापरिभासमिन्ति यायेन यथाकालं यथा-कर्म समाचरन् एकएव पाचकः पाठक इति संख्यातीत संज्ञा-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वान् भवति एवमिद माकाशं घटादि नापरिच्छिद्यमान घटाकाशं मठाकाशं पटाकाशमिति नाना-संज्ञावद्भवति स्वस्वोत्तर गुणसमावेशेन शब्दतन्मात्रमाकाशं शब्दस्पर्शतन्मात्रो वायुः शब्दस्पर्शरूपतन्मात्रं तेजः शब्दस्पर्शरूपरसतन्मात्रं जलं गन्धेन सह पञ्चतन्मात्रा पृथिवीति नानारूपेण परिणतं नाना नामकं तदनेन न्यायेन ब्रह्मैव सर्वात्मकं तदुक्तम्

"सर्वं खल्विदंब्रह्मेति" तदेवं शास्त्रसम्मतिमुपलभ्य वेद-मूलेतिहाससमग्रे निवेदयिष्यामि स्मरामि च—

"यदागमास्त द्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति यं विषयमुद्दिश्यागम प्रवर्तते तमेव विषयं तद्गुणीभूतानि तदनुकारीणि उपनिषदमारभ्य साहित्यान्त शास्त्राणि समुपदिशन्ति तद्ग्रहणेन तदर्थं बोधकत्वेन स्मृत्यादिवाक्यानि गृह्यन्ते स्वीक्रियन्ते वेदानुकारं वर्णितानि सन्ति तद्ग्रहणेन वेदोक्तग्रहणेन स्मृत्यादिशास्त्राणि गृह्यन्ते अनुमन्यन्ते इति तथाच सूतसंहितायाः ७ रहस्ये ।

देवताः सर्वदेहेषु स्थिताः सत्यतपोधनाः ।
सर्वेषां कारणं साक्षात्परतत्वमपि स्थितम् ॥ १ ॥
पञ्च भूतात्मकेदेहे स्थूले षाट्कौशिके सदा ।
पृथिव्यादिक्रमेणैव वर्तन्ते पञ्चदेवताः ॥ २ ॥
कार्य्यं ब्रह्म महीभागे कार्य्यं विष्णुर्जलांश के ।
कार्य्यं रुद्रोऽग्निभागे च वाय्वंशे चेश्वरः परः ॥ ३ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आकाशांशे शरीरस्य स्थितः साक्षात्सदाशिवः ।
शरीरस्य बहिर्भागे विराडात्मा स्थितः सदा ॥ ४ ॥
अन्तर्भागे स्वराडात्मा सम्राड् देहस्य मध्यमे ।
ज्ञानेन्द्रिय-समाख्येषु श्रोत्रादिषु यथाक्रमम् ॥ ५ ॥
दिग्वाय्वर्कजलाध्यक्षभूमिसंज्ञाश्च देवताः ।
कर्मेन्द्रियसमाख्यासु पादपाण्यादिषु क्रमात् ॥ ६ ॥
त्रिविक्रमेन्द्रब्रह्माख्या देवताश्च प्रजापतिः ।
मित्रसंज्ञश्च वर्तन्ते प्राणे सूत्रात्मसंज्ञितः ॥ ७ ॥
हिरण्यगर्भो भगवानन्तःकरणसंज्ञिते ।
तदवस्थाप्रभेदेषु चन्द्रमा मनसि स्थितः ॥ ८ ॥
बुद्धौ बृहस्पति र्विप्राः स्थितः कालाग्निरुद्रकः ।
अहङ्कारे शिवश्चित्ते रोमसु क्षुद्रदेवताः ॥ ९ ॥
भूतप्रेतादयः सर्वे देहस्थास्थिषु संस्थिताः ।
पिशाचा राक्षसाः सर्वे स्थिताः स्नायुषु सर्वदा ॥१०॥
मज्जाख्ये पितृगन्धर्वास्त्वङ्मांसरुधिरेषु च ।
वर्तन्ते तत्र संसिद्धा देवताः सकला द्विजाः ॥११॥
त्रिमूर्तीनान्तु यो ब्रह्मा तस्य शान्ता तनुर्द्विजाः ।
वर्तते वामनेत्रान्तर्भागे बाह्ये निशाकरः ॥१२॥



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रिमूर्तीनां तु यो विष्णुः तस्य योगा तनुर्द्विजाः ।
दक्षिणाक्षिणि जन्तूनामन्तर्भागेर्विहरिः ॥१३॥
त्रिमूर्तीनां तु यो रुद्रः स कण्ठे वर्तते सदा ।
अन्तः शाश्वतनुर्घोरा तनुर्बाह्ये द्विजर्षभाः ॥१४॥
सर्वेषां कारणं यत्तद् ब्रह्म सत्यादिलक्षणम् ।
ब्रह्मरन्ध्रे महास्थाने वर्तते सततं द्विजाः ॥१५॥
चिच्छक्तिः परमा देह-मध्यमे सुप्रतिष्ठिता ।
मायाशक्तिर्ललाटाग्र-भागे व्योमाम्बुजादधः ॥१६॥
नादरूपा पराशक्तिर्ललाटस्य परांशके ।
भागे विन्दुमयी शक्ति र्ललाटस्य परांशके ॥१७॥
विन्दुमध्ये तु जीवात्मा सूक्ष्मरूपेण वर्तते ।
हृदये स्थूलरूपेण मध्यमेन तु मध्यमे ॥१८॥
देवी सरस्वती साक्षाद् ब्रह्मपत्नी सनातनी ।
जिह्वाग्रे वर्तते नित्यं सर्वविद्याप्रदायिनी ॥१९॥
विष्णुपत्नी महालक्ष्मीर्वर्तते विष्णुना सदा ।
रुद्रपत्नी तु रुद्रेण पार्वती सह वर्तते ॥२०॥
सर्वत्र वर्तते साक्षाच्छिवः साम्बः सनातनः ।
सत्त्वादिलक्षणः शर्वः सर्वदेवनमस्कृतः ॥२१॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतश्च भोगमोक्षार्थी शरीरं देवतामयम् ।
स्वकीयं परकीयञ्च त्यज्यते तु विशेषतः ॥२२॥
न क्षतं विग्रहे कुर्य्यादस्त्रशस्त्रनखादिभिः ।
तथा न लोहितं कुर्य्याद्यदि कुर्य्यात्पतत्यधः ॥२३॥
शरीरं देवतारूपं भजध्वं यूयमास्तिकाः ।
छान्दोग्ये चरके चोक्तः पुरुषो लोकसम्मितः ॥२४॥

पूर्वं दर्शनमाश्रित्य विचारः प्रवृत्तः सम्प्रति पुराणवेदायुर्वेद-माश्रित्य विचारः प्रवर्तते ।

प्रथमं सर्वशास्त्रमयी गीतेति ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥

इति च वर्णितमाहात्म्यां गीतामाश्रित्य किञ्चिदुच्यते । सन्धाय संभाषया संसारे भगवद्ज्ञानमावश्यकं तच्चातिदुष्करम् तदुक्तम् मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" इति । तत्त्वञ्च किञ्चिदुक्तम् ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति । भागवतेईश्वरस्य सर्वकारणत्वमुक्तम् ।

जन्माद्यस्य यतोऽन्वयादिति

तत्रैवैकादशे स्कन्धे १६ अध्याये भगवतः सर्वात्मकत्वमुक्तम् ।

गत्युत्सर्गोपादानमानन्दस्पर्शलक्षणम् ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आस्वाद-श्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियम् ।
पृथिवी वायुराकाश आपोऽज्योति रहं महान्
इत्यादिना ।
संस्थानं परमाणूनां कालेन क्रियते मया इत्यन्तसन्दर्भेण
तत्रैव २२ अध्याये उद्धवप्रश्नोत्तरे च तत्त्वदर्शनं कृतम् ।
प्रकृतिर्गुणसाम्यं वै प्रकृते र्नात्मिनो गुणाः
इत्यादिना
सत्वादिभिर्गुणै र्धत्ते पुरुषोऽथ ईक्षते ।
इत्यन्तेन । तथा विष्णुधर्मोत्तरे च। 'तस्माद्भवति चाव्यक्तं तस्मादात्मापि जायते इत्यादिना शरीरग्रहणं पूर्वं सृष्ट्यर्थं-कुरुते प्रभुरित्यन्तसंदर्भेण।"

'मार्कण्डेय-पुराणे च' ४३ अ०
प्रधानं कारणं यत्तदव्यक्ताख्यं महर्षयः
इत्यादिना
ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम् ।
इत्यादि सन्दर्भेण । वाराहे च
आदावहं व्योम ततस्ततोऽणुरेकैव मत्तः प्रबभूव बुद्धिः ।
कल्पे-कल्पे तत्र शयामि भूयः सुप्तस्यान्ते नाभि नः स्यात्तथाद्यः
इत्यन्तेन । ( पाद्मेच ) ३ खण्डे
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्यादिना सृष्टिक्रममाश्रित्य तत्ववर्णनम्। बहुविस्तृतमिह विस्तरभयान्न विवृतम् (महाभारते) शान्ति पर्वणि युधिष्ठिरवाक्ये

कुतः सृष्टमिदं विश्वं जगत्स्थावरजङ्गमम्।
प्रलये च कमभ्येति तन्मे ब्रूहि पितामह॥
ससागरः सगगनः सशैलः सवलाहकः।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः॥

केनेति कारणप्रश्ने कथमिति प्रकारप्रश्ने जीवः कीदृगिति जीवतत्वप्रश्ने कस्मिन् विलीयते इति मुक्तप्राप्यवस्तुप्रश्ने ब्रह्माद्वैतसिद्धये कृत्स्नस्य जगतो ब्रह्मोपादानकत्वं प्रतिपादयिष्यन् असतोऽधि मनाऽसृजत् मनः प्रजापतिः प्रजापतिः प्रजाः तद्वा इदं मनस्येव परमं प्रतिष्ठितम् यदिदं किञ्चनेति श्रुतिमनुसरन्नुत्तरमाह सत्वासत्वाभ्यां निर्वक्तुमशक्यादज्ञानात्मन उत्पन्नं तच्चमनश्चित्प्रतिविम्बविशिष्टमानसोनाम जगतो मूलकारणम्। अनिर्वचनीयस्याज्ञानस्य स्वरूपतोऽसत्वमुक्तम्। अनादिनिधनमिति जन्मादिराहित्य-मुक्तम् अतएव शाश्वतः सदैकरूपः अव्यक्त इति संज्ञाऽप्रत्यक्षत्वात् तथा चायुर्वेदे भरद्वाजप्रश्ने भृगुवाक्यम्।

मानसो नाम यः पूर्वो विश्रुतो वै महर्षिभिः।
अनादिनिधनो देव-स्तथाऽभेद्योऽजरामरः॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अव्यक्तइति विख्यातः शाश्वतश्चाक्षयोऽव्ययः ।
यतः सृष्टानि भूतानि जायन्ते च म्रियन्ति च ॥

इत्यादिना । अनन्तमेतदाकाशं सिद्धदैवतसेवितमित्यादिना च संदर्भेण जगत्सृष्टिवर्णनपूर्वकं विराट्स्वरूपं वर्णितम् । ( शान्तिपर्वणि च )

"भूमेः स्थैर्यं गुरुत्वं च काठिन्यं प्रसवार्थता"

इत्यादिना । भूम्यादि गुणवर्णन-पूर्वकं "इष्टा-निष्ट-विपत्तिश्च व्यवसायः समाधिता । संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः ॥ इति बुद्धिगुणवर्णनं कृतम् । विष्णुधर्मोत्तरेच—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
तस्य त्रिंशत्तमो भागः परमाणुः प्रकीर्तितः ॥
प्रथमं परिमाणानां त्रसरेणुं प्रचक्षते ।
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिणामतः ॥

इत्यादिना लघ्वक्षरसमा मात्रा निमेषः परिकीर्तितः ।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ॥
नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः ।
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दश त्रुटिःस्मृतः ॥

इत्यादिना च परमाण्वादि-निमेषादि-परिमाणाश्च दर्शिताः । शुक्लयजुर्वेदे । ३२ । २ ऋक्—

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । नैनमूर्ध्वं
तिर्यञ्चं न मध्ये परिजग्रभत् ॥ इति

सर्वे निमेष-त्रुटि-काष्ठादयः, विद्युदादयश्च पुरुषादधि सकाशाज्जाताः, न चैनं पुरुषम् ऊर्ध्वादि प्रदेशे कश्चित्परिगृह्णाति प्रत्यक्षाद्यविषयत्वात्, तथा च श्रुतिः-एष नेतिनेत्यात्माऽग्राह्यो नहि गृह्यते इति ।

अर्थादुत्थास्नवोधर्मा अनुमात्रादयो यथा ।
तद्धीत्वमपि तद्वत्स्यादित्यर्थोऽनर्थमाविशेदिति ।
उपवासाद्वरं भिक्षेति

न्यायेन भूयः श्रूयमाणस्याप्यभेदस्य बुद्ध्यनारोहे भेदबुद्ध्यापीश्वरमाराध्याभेदबुद्ध्युदये शालि-समृद्धौ कोद्रवत्यागन्यायेन भेदधीस्त्याज्या ।

अभेदश्च शुक्लयजुर्वेदे अ० ३२ ऋक् १

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तत् ब्रह्म ता आपः स प्रजापतिः ॥

इति दर्शितः । तत्करणं ब्रह्म ब्रह्मत्रयोलक्षणम् । उ एवार्थे ।
तदेवेति ४ ऋक् च—

एषोहि देवः प्रदिशोऽनुसर्वाः पूर्वोहि जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



ह प्रसिद्धे सर्वाः प्रदिशः एषएव देवः अनु व्याप्य तिष्ठति जनाः सम्बोधनम् । प्रत्यङ् प्रतिपदार्थमञ्चति । इति सर्वतोमुखः सर्वतोमुखाद्यवयवः अचिन्त्य-शक्तिः ॥

सामवेदे—उत्तरार्चिके २१ अध्याये—७ खण्डे-वातस्तुतौ १ मन्त्रे 'वातआवातु भेषजं शम्भुमयो नोहृदे पुन आयूंषि तारिषत्" वातः भवान् नः अस्माकं हृदये शम्भुमयः शुद्धचित्तः सन् भेषजम् आवातु सद्बुद्धिं ददातु-आयूंषि प्रतारिषत् । विस्तारयतु । इति । वायोरायुष्प्रदत्वमुक्तम् । २ मन्त्रे 'उत वात पिताऽसि न उत भ्रातोतनः सखा सनोजीवातवे कृधि ।" वात नः अस्माकं पिता उत्पादकोऽसि-भ्राता तत्समः प्रेमकारी सखा मित्रं सत्वं जीवातवे-जीवनार्थं यज्ञादि सम्पादनं कृधि कुरु॥इति यज्ञ-सम्पादकत्वमुक्तम् । ३ मन्त्रे "यददा वातनोगृहे अमृतं निहितंगुहा । तस्यनाधेहि यावसे" । हे वायो यददः अमृतं गुहासु निहितं तदस्मभ्यं यावसे प्रकाशयुक्तं कुरु ।

वायुरेव आयुर्बलादिस्वरूपः सर्वकर्मणि प्रेरणाशीलः आकुञ्चन-प्रसारणादि-कर्म्मा जलप्रतिबिम्बन्यायेन प्रतियोनि नानारूपवान्—श्वास'प्रश्वासादिना विश्वमिदं पालयति । तदेवं वेदेन ब्रह्माभेदं वायोः प्राणदत्वं च प्रदर्श्य पुनः पुराणादि-वचनमाश्रित्य कृमि समुत्पत्तिश्चिन्त्यते ॥ तथाच—

'पाद्मे-पातालखण्डे । ९९ अध्याये--

यस्योदरगतश्चान्नं स्वंहि रूपं परित्यजेत् ।
कृमिमिश्रममेध्यत्वं शीघ्रं प्रजायते किल ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्यादि ।

जायन्ते तत्र वै यूकाः कृमयो वा न संशयः ।
स कृमिः कुरुते स्फोटं कण्डूश्च परिदारुणाः ॥

इत्यादि ।

प्राणिनां हि कपालेषु कृमयः सन्ति पञ्च वै ।
द्वावेतौ कर्णमूले तु नेत्रस्थाने पुनः पुनः ॥
कनिष्ठाङ्गुलिमानेन रक्तपुच्छाश्च भूपते ।
नवनीतस्य वर्णेन कृष्णपुच्छा न संशयः ॥
तेषां नामानि भद्रन्ते मत्तो निगदतः शृणु ।
पिङ्गली शृङ्गली नाम द्वौ कृमी कर्णमूलयोः ॥
भृंगली जंगली चान्यौ नेत्रयोरन्तरस्थितौ ।
कृमीणां शतपञ्चाशत् तादृग्भूता न संशयः ॥
इत्यादि, नरस्य स्फुटते लिंगंनार्य्या योनिश्च भूपते ।
स्त्रीनरौ तौ प्रमत्तौ च गच्छतः संगमं ततः ॥

इत्यादि सन्दर्भेण कृमीणामुत्पत्तिः प्रदर्शिता । 'आयुर्वेदे च चरके ।

यस्मादूर्ध्वमूलमधः शाखमृषयः पुरुषं विदुः ।
तस्माच्छिर आरभ्य वर्णयामि ।
तिल-क्षीर-गुडाजीर्णपूतिसंकीर्णभोजनात् ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्लेदोऽसृक्कफ-मांसानां दोषः समुपजायते ।
ततः शिरसि संक्लेदात् कृमयः पापकर्मणः ॥

इत्यादिना चिराच्च पाकं व्रजति शीघ्रं व्याप्य प्रमुच्यते। कृमयश्चापि क्लिद्यन्ते पूतिगन्धि चेत्यन्तेन ग्रन्थसन्दर्भेण चरके बहिर्मलजादया नानाभेदाःकृमयः प्रदर्शिताः सुश्रुते च। स्वभावव्याधि प्रतिषेधनीयं सोमेष्टिप्रकरणं समालोचनीयम् । नहि सर्वे व्याधयः कृमितो भवन्ति एते परिगणिताः कृमिरोगा आगन्तुजाश्च बहवो व्याधयः ।

"स्वर्गापगा हेममृणालिनीनां तस्या वयं नालभुजो भजामः
अन्नानुरूपं तनुरूप-मृद्धि-रितिवत्
यादृशं भक्षयत्यन्नं बुद्धि र्भवति तादृशी ।
तमो भक्षयते दीपः कज्जलं हि प्रसूयते ।

इति दिशा नवीनाः स्वकीयममितं ज्ञानं मन्यमानाः कृम्यादि-मांसाशन-पुष्टाः सर्वत्रैव कृमिमयमवलोकयन्ति । नचैतद्युज्यते भ्रमवशा न्मांसं पेशी मूत्रं स्नायुपुञ्जं मेदोवर्त्तीन्यन्यानि च शरीरखण्डानि पृथ्व्यादिभेदभिन्नानि वातेन धनञ्जयेन विधूयमानानि समालोक्य सर्वाणि च तेषां ज्ञानात्ममानिनां लक्षणानि विशिष्टविज्ञानेन निरस्तानि । शुक्तौ रजतज्ञानमिव शिरादौ कृमिज्ञानं भ्रमत्वं नातिवर्तते समानानेकधर्मोपपत्तेर्विप्रतिपत्ते-रुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च संशय इति न्यायसूत्रप्रतिपादित-हेतुपञ्चकं विना नवीनानां कृमि-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



संशयः कं हेतुमवलम्बतां, निश्चयश्च कः नहि य एव संशयो हेतुः स एव निश्चयहेतुरिति, तदेते सर्वत्र कृमि मन्यमानाः शुक्तौ रजतं मन्यमाना इव

यस्या ज्ञानं भ्रमस्तस्य भ्रान्तः सम्यग् नवेत्ति स
इति न्यायं नातिक्रामति तस्मात्

त्रयो दोषा धातवश्च पुरीषं मूत्रमेवच।
देहं संधारयन्त्येते ह्यव्यापन्ना रसैरिह ॥
पुरुषः षोडशकलः प्राणाश्चैकादशैव च
ये रोगाणां सहस्रं यत् शतं विंशतिरेव च।
एतेषामन्तरे सर्वे नव्या रोगा विशन्ति ते ॥

इत्युक्तदिशा सर्वं नेयमिति ।

सौन्दर्यसम्पत्तारुण्यं यस्यास्ते तेच विभ्रमाः ।
षट्पदान् पुष्पमालेव कान्नाकर्षति सा सखे इति–

न्यायेन करि-बृंहित-न्यायेन च महाभूत-विचारे आयुर्वेद-शास्त्रमाकर्षति अतिक्रान्तावेक्षणेन पूर्वं वर्णितमपि विचार्य्य-विशेषस्यासिद्धत्वात् विचारे विचारान्तरसम्भवाच्च पूर्वं दर्शनमाश्रित्य कृतेऽपि विचारे आयुर्वेदसिद्धे प्रौढ़-विचारे जिज्ञासूनां जिज्ञासाप्रतीतेः कथङ्कारं जानतापि न प्रवर्त्यते 'पूर्वसंबन्धनियमहेतुत्वे तुल्य एव नौ । हेतुतत्वबहिर्भूतसत्वा-सत्वकथा वृथे' ति जिज्ञासैव सर्वत्र विचार-प्रवृत्ति हेतु रिति ।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सौश्रुत-मतेन पञ्चमहाभूत-विचारः प्रस्तूयते। पञ्चानां महा-भूतानां समाहारः तस्य विचारः पञ्चमहाभूतविचार इति तत्राकाशस्योपादानं केचिन्मन्यन्ते अपरे न, तदेतदुपरितन-ग्रन्थे उपपादयिष्ये नहि प्रतिज्ञामात्रेण वस्तुसिद्धिर्हेत्वादिकमपि किञ्चिद्वक्तव्यमिति तदनुक्त्या सुधीभिरग्राह्यता आपतति तथापि वैद्यविद्यासम्बन्धे प्रमाण-पुञ्ज-सद्भावेऽलन्तदुद्भाव-नेन। भूतशब्दश्च भूधातोः क्तप्रत्ययेन निष्पन्नः

"भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबं त्रिषूच्यते। प्राप्ते वृत्ते समे सत्वे देव-योन्यन्तरेतु ना

(१) इत्यादि मेदिनीवाक्यादनेकार्थकोऽपि प्रकरणस्य तात्पर्य्यनिर्णायकत्वात् पृथिव्यादिविचारप्रस्तावात्तदेव भूतपद-वाच्यं पर्य्यवस्यति तस्य विचारः।

(२) किं कारणं किं कार्य्यं किं लक्षणमिति तत्राव्यक्तमूल-प्रकृत्यपरपर्य्यायं कारणं सत्वरजस्तमोलक्षणम् अविकृति-रूपं कारणं महानहङ्कारः पञ्चतन्मात्राणि चेति अष्टरूपं प्रकृति-विकृतिरूपं कारणं, भौतिकं घटादिकं शरीरादिकं कार्य्यम्। किंस्वरूपमिति प्रश्ने कार्य्यकारणतादात्म्यात् समुद्रोदक-न्यायेनोदक-स्वभाव-समुद्रतस्तत्स्वभावस्य नद्यादेरिव जड-स्वभावात्सुखदुःखमोहस्वभवाच्चाव्यक्तात्तत्स्वभावस्यव महदा-देरुद्भवः। प्रतिभूतं लक्षणन्तु आन्तरिक्षः शब्दः शब्देन्द्रियं सर्वछिद्रसमूहो विविक्तताच वायव्यः स्पर्शः स्पर्शनेन्द्रियं सर्व-चेष्टासमूहः। सर्वशरीरस्यन्दनं लघुताचेति तैजसं रूपं रूपेन्द्रियं

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यं शौर्य्यञ्चेति आप्यन्तु रसो रसनेन्द्रियं सर्वद्रवसमूहो गुरुता शैत्यं दैन्यञ्चेति। पार्थिवं गन्धो गन्धेन्द्रियं सर्वमूतसमूहो गुरुता चेति। सत्व बहुलमाकाशं रजोबहुलोवायुः सत्वरजोबहुलोऽग्निः। सत्वतमो-बहुला आपः। तमोबहुला पृथ्वी तदेवं भूतलक्षणवृत्तम्।

(३) भूतानामेकेन्द्रियार्थाश्रयित्वमनेकेन्द्रियार्थाश्रयित्वं वा इति विचार्य्यते तत्रोभयमिति ब्रूमः। अपञ्चीकृतभूतमादाय आकाशमादायचाद्यपक्षः पञ्चीकृतवाय्वादिमादाय च द्वितीयः शब्दादय इन्द्रियार्थाः। तदुक्तं सुश्रुते।

अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत्।
स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमुच्यते॥

इति अनुप्रवेशो यथा-शब्दगुणकमाकाशं वायुप्रविष्टं शब्द स्पर्शगुणत्वं वायोः आकाशवायुतेजस्सु प्रविष्टं शब्दस्पर्श-रूपगुणत्वं तेजस एवमुत्तरोत्तरं गुणवृद्धिः। तदेवमाका-शादीनामन्यानुप्रवेशेनावस्थिताना-मन्यानुप्रविष्टत्वमुक्तम् तदेव-मनुप्रवेशादिन्द्रियेष्वपि वैशेष्यात्तु तद्वादस्तद्वाद इति न्यायात्त्व-गादौ वाय्वादेराधिक्यं द्रष्टव्यं तत एवच तत्तद्गुणग्राहकत्वं भूतानां प्रातिस्विककार्य्यकारित्वं स्वाभाविकमन्यसंसर्गात्तु कार्य्यान्तरकारित्वमपि। तदुक्तम्

अनुष्णाशीतस्पर्शोऽयं द्रव्यं ज्ञै वायुरिष्यते।
दाहकृत्तेजसा युक्तं शीतकृत्सोमसंश्रयात्॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति अनुप्रवेशश्च कार्य्यादवगम्यते यथा वायोर्जले तरङ्गादिकारित्वादिति ॥

( ४ ) भूत-स्वरूप-गुण-धर्मादीनां विवेचनन्तु वृत्तमेव ।

सम्प्रति भूतसंख्याविमर्शः क्रियते ।

( ५ ) यद्यपि हेतुशास्त्रे लक्षणप्रमाणाभ्यां वस्तुसिद्धिः । प्रमेयसिद्धिः प्रमाणाद्धीति न विना हेतुं वस्तुसिद्धिस्तथाप्यायुर्वेद-सम्भाषया प्रवृत्या पञ्चमहाभूतानि सुखिरत्वादिस्वभावानि प्रकृतिपरिणाममयानि परस्पर-सम्मेलनादवान्तरभेदाच्च संख्यातीतान्यपि सामान्यतः पञ्चसंख्यायामेव व्यवतिष्ठन्ते—इतरथा "अथान्यसः विशेषश्चेत्तद्धीत्वं कश्चिदिष्यते । दत्तः साकारवादाय विष्टरः स्पष्टमेवतु इति खण्डन-कृदुपहासं नातिक्रमेत् ।

( ६ ) भूतानां सादित्वमित्यादि षष्ठविचारे मतभेदेन वस्तुभेदेन चोभयमिति ब्रूमः । तथाहि, न्यायनये परमाणुरूपाणां भूतानाम् आकाशस्य च नित्यत्वमिति अनादित्वमायाति । सांख्यादि-मते प्रकृतितआत्मतश्च सृष्टौ सादित्वमिति उभयं पर्य्यवस्यति । सादित्वे उत्पत्तिक्रमाक्रमविचारेऽपि सांख्यादिमते आकाशादिक्रमाः न्यायमतेऽक्रमेति उभयमेव समायाति ।

( ७ ) गुणेभ्यः कारणान्तरेभ्यो भूतानामुद्भवप्रकारः इति सप्तमविचारेपि, परिणामवादे मायाप्रकृति-पदव्यपदेश्याः सत्वादयो गुणाः कारणानि । आकाशादिभूतानां महदादि

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



क्रमेण विवर्तवादेच ब्रह्मैव कारणम्। आरम्भवादे च परमाणवः कारणानि प्रकारश्च। आद्यवादे पूर्वं तन्मात्र-पद-व्यपदेश्य-सूक्ष्मभूतानामपञ्चीकृतानामुत्पत्तिस्ततः पञ्चीकृतानां महाभूतानां पञ्चीकरणञ्चसर्वेषामर्धं चतुर्धा कृत्वार्द्धान्तरे सम्मेलनमिति। द्वितीये-शुक्तिका-रजतमिव तद्ब्रह्म सर्व-मभवदिति। तृतीये द्व्यणुकादिक्रमेणेति॥

(८) भूतानामितरेतरव्यवकीर्णत्वं कथं सम्पद्यते। इत्यष्टम-विचारः प्रस्तूयते। तच्च पञ्चीकरण-प्रकार-प्रदर्शने कृतविवेचन-मपि स्थूणानिखननन्यायेन पुनर्विविच्यते। पूर्वमात्मनोऽह-ङ्कारतो वा समुत्पन्नां सूक्ष्मभूतानां तन्मात्रपदव्यपदेश्यानां प्रत्येकमर्धभागान् चतुर्धा विधाय स्वेतरार्धभागे संयोजने-तरेतरव्यवकीर्णत्वं सम्पद्यते। अथैवं सर्वस्य पञ्चीकृतस्य सर्वा-त्मकत्वात्तत्तद्व्यपदेशः किं निबन्धन इति चेत् अर्धान्तराधिक्य-निबन्धन इति ब्रूमस्तद्यथा पञ्चीकृताकाशादिषु अर्धभागस्ये-तरभूतचतुष्टयरूपत्वे तदितरार्धभागस्य तत्तद्रूपत्वेन भूयसा हि व्यपदेशो मल्लग्रामादिवदिति महाभाष्यकारोक्तदिशा वैशेष्यात्तु तद्वादस्तद्वाद इति वेदान्तसूत्रप्रदर्शितदिशा च तत्तद्भूतव्यपदेशो वैशेष्यादेव च घ्राणादिषु पृथिव्यादीनां गन्धादिप्रातिस्विकम् गुणग्राहकत्वम्।

(९) भूतानां सृष्टिकारणत्वं कीदृगिति नवमविचारः समायाति। अत्र परममूलमाश्रित्य विचारे महाभाष्यकारवचनं दृष्टिपथमवत्तरति "एकान्ता इति" परिणामवादे एकमव्यक्त-

पुस्तकालय
गुरुकुल कांगड़ी
CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्ते अवसाने येषां ते एकान्ता विवर्तवादे एकं ब्रह्म। आरम्भ-वादे च एकः परमाणुरिति तदेव ब्रह्मतः परमाणुतो वा महदादि आकाशादि द्व्यणुकादिक्रमेण सूक्ष्मस्थूलभूतानामुत्पत्तिस्तः पश्चाद्घटादिशरीरादिभौतिकद्रव्यमुत्पद्यते सृष्टिकाले प्रलयकाले च स्वस्वकारणे लये क्रमेण परमकारणे लयात्कारणमात्रमवशिष्यते। तदुक्तम् एकान्ता इति एवं यथासमयं भूतानामुत्पत्तिः प्रलयस्येति। योगादिविधिना ब्रह्मादितत्वज्ञाने मोक्षः, सच मतभेदेनानेकधा विकल्पते। दीपशिखानिर्वाणवद् ज्ञानसन्तान-निर्वाण इति केचित्। निराकारनित्यज्ञानावस्थेत्यपरे। सततमूर्ध्वगमनमित्यन्ये। ब्रह्मात्मैक्यज्ञानाद्ब्रह्मभाव इति वेदान्तिनः। दुःखत्रय-निवृत्तिरिति सांख्याः तार्किकाश्च। प्रकृतेरप्रसवश्चितिशक्तेः, स्वरूपप्रतिष्ठा वेति पातञ्जलाः। तथा च योगसूत्रम्—

प्रकृतेरप्रसवः स्वरूपप्रतिष्ठा वा चिच्छक्तिरिति।

श्रवणादिविधिना तत्त्वसाक्षात्कारान्मोक्षइति सर्वत्र सिद्धम् श्रवणञ्च वाक्यतात्पर्यावधारणं वाक्यञ्च पदसमूहः। पदञ्च प्रकृतिप्रत्ययात्मकं प्रकृतिप्रत्ययौ च सह भावेन स्वस्वार्थबोधकौ तदुक्तम् "प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति "ब्रह्मातिरिक्तं सर्वमसदिति"।

एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन" २

इति श्रुतितः समायाति, तेन घटादिकार्यं कारणं दण्डादिसर्वमसदेव। तदुक्तम्

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्तर्भावितसत्वञ्चेत्कारणं तदसत्ततः ।
नान्तर्भावितसत्वञ्चेत्कारणं तदसत्ततः ॥

इति अव्यक्तमेव सृष्टिसमये कार्य्यरूपेण व्यक्तं भवति व्यक्तं च प्रलये सर्वरूपेणाव्यक्तं भवति । आत्मा च संसारे बुद्ध्या विमुक्तश्चक्रवत्परिवर्तते । तदुक्तम्

अव्यक्ताद् व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।
रजस्तमोभ्यामाविष्टं चक्रवत्परिवर्तते ।
अतीन्द्रियैरतिसूक्ष्मरूपैरात्मा कदाचिन्नविमुक्तपूर्वः ।
नैवेन्द्रियैर्नैव मनोमतिभ्यां नचाप्यहङ्कारविकारदोषै
रिति 'प्रकृतेर्महांस्ततोहङ्कार' इति

पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गमिति ॥
येषां द्वन्द्वे पराशक्तिरहङ्कारपराश्च ये ।
उदयप्रलयौ तेषां न तेषां ये स्वतोऽन्यथेति ॥

तदेष आत्मा संसारकाले स्वयं चिद्रूपोऽपि सुखादि-स्वरूपसत्वादिप्रतिबिम्बनात्सुखादिमानिव भाति जले चन्द्रादिप्रतिबिम्बवत् उदयास्तसमये सूर्य्यादिरक्तिम्ना-नुरक्ताकाशादिवच्च । मन्त्रादिगुप्त्या स्वक्रियाकुशलो राजेव ब्रह्म प्रकृतिसहायेन जगन्निर्वाणकुशलम् । तच्च कारणं



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सृष्टेः पूर्वमव्यक्तमसदित्युपचर्य्यते । तदुक्तम् "असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानं स्वयमकुरुत स्वरूपेण सदपि, तथा च श्रुतिः सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीय" मिति, अद्वैतमेव पारमार्थिकमन्यत्सर्वमसत्। तदुक्तम् "कथं सामान्यतो ज्ञाते नैवज्ञाते विशेषतः। पदबोधस्त्वया कर्तुंशक्यः स्यादद्वयश्रुतेः।'

"नानात्वमवलम्ब्यापि वदत्यद्वयवादिनि।
असिद्धभेदव्याघातः पतेदापादकात् कुत" इति।

कृतमनया भूतकारणत्वविचारे प्रसक्तानुप्रसक्त्येति।

(१०) अथ परिणामारम्भ-क्रिययोर्विशेषः प्रतिपाद्यते। परिणामवादिसांख्यादिनये क्षीरदधिन्यायेन केवलात्प्रकृत्यादित उपादानकारणादेव कार्य्यं नेतरत्कारणमपेक्षते। नहि क्षीरं दधिभावे स्वेतरमपेक्षते। आरम्भवादिन्यायादिनये च संयोगाद्यसमवायिनिमित्तव्यपेक्षात्परमाण्वाद्युपादानाद् द्वयणुकादिकार्य्यमिति विशेषः--स्पष्ट एव प्रतिभाति। अपिच परिणामवादे कार्य्यकारणयोरभेदमामनन्ति। तन्तव एवातानवितानवन्तः पटभावमापद्यन्ते। न तन्तुभ्योऽर्थान्तरं पट इति आरम्भवादे च भेदं, तन्तुभ्यो नानायवेभ्यः संयोगव्यपेक्षेभ्योऽर्थान्तरं प्रावरणादिकार्यान्तकारिपटाद्यवयविद्रव्यमुत्पद्यते इति तद्वाद्यभिमतम्। नचान्यतरपक्षे किञ्चिच्छंकनीयं व्याघातापत्तेः। तदुक्तम्--

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



व्याघाता यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ।

इति पुरुषश्चेतनः कार्य्यकारणसंघातयुक्तश्चेतयिता भवति प्रकृतिरचेतनाऽपि पुरुष-भोगापवर्गार्थं वत्स-विवृद्ध्यर्थं क्षीरमिव कामिनीदर्शने शुक्रमिव आम्लदर्शने मुखजलमिव स्वयमेव प्रवर्तते, नहि प्रवृत्तावीश्वरमपेक्षते । तदुक्तम्—"वत्सविवृद्धिनिमित्तं प्रवृत्तिरज्ञस्य यथा क्षीरस्य । पुरुषविमोक्ष निमित्तं तथा प्रवृत्तिः प्रधानस्येति"-"पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते करण मिति"। 'ईश्वराऽसिद्धे रिति च-खरादिलिंगश्च पृथिव्यादि । तदुक्तम्—

'खरद्रवचलोष्णत्वं भूजलानिलतेजसाम् ।
आकाशस्याप्रतीघातोदृष्टं लिङ्गं यथाक्रम' मिति ।

स्पर्शवद्धि द्रव्यं प्रतिघातकं न चाकाशं स्पर्शवत्तेन भवति अप्रतिघातलिंगमिति । सुखादिरूपशान्तत्वादिधर्मसद्भावासद्भावाभ्यां तन्मात्राणि महाभूतानि चाविशेषविशेष पदप्रतिपाद्यानि भवन्ति । तदुक्तम्—

तन्मात्राण्यविशेषा स्तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्चेति ॥

अत्र चकारो हेतो यतः शान्तादयोऽतो विशेता इति ।

(११) दृश्यानां पृथिव्यादीनां भूतत्वं न वेति विचार्य्यते ॥

भूतत्वं नाम आत्मावृत्तिविशेषगुणवत्त्वमिति । शब्दादि

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



विशेषगुणवत्वात्कथं नेमानि भूतानि । इति कारणकार्य्य-साजात्यादपि भूतत्वं सिध्यति नहि सूक्ष्मभूततन्मात्रकार्य्यं स्थूलं पृथिव्यादि अभूतं भवति । अपिचाभिव्यक्तशब्दादि विशेषगुणवत्वान्महाभूतत्वं तेषामामनन्ति । तदुक्तम्--

महाभूतानि खं-वायु-रग्निरापः क्षितिस्तथा ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ॥

शब्दमात्रगुणमाकाशं शब्दस्पर्शगुणोवायुः शब्दस्पर्शरूप-गुणन्तेजः । शब्दस्पर्शरूपरसगुणा आपः शब्दस्पर्शरूपरस-गन्धगुणा पृथिवी । इतरे च महत्त्वादयस्तत्सहभाविगुणा यथा द्रव्यं व्यवतिष्ठन्ते । इति ॥

(१४) परमाणुतन्मात्रया र्विवेचनं तयोर्भेदोऽभेदोवेति ।

उभयमिति ब्रूम स्तत्तथाहि वाय्वादिषु शब्दस्पर्शादि-द्वित्रादिगुणोपलब्धेस्तत्परमाणूनां शब्दस्पर्शादि द्वित्रादितन्मात्रा रूपात्वमिति परमाणुतन्मात्रे ति संज्ञाभेदमात्रमिति । "मायांतु प्रकृतिं विद्या" दित्युक्तदिशा दर्शनैकवाक्यता विचारदशायामभेदः प्रतिभाति । भिन्नप्रस्थानत्वेन परमाणूना-मनवयव द्रव्यत्वाभ्युपगमेन च भेद :समायातीति । तदुक्तम् "सर्वोद्वन्द्वोवि-भाषयैकवद्भवतीति" । अत्र सर्वोद्वन्द्व इति परमाणुतन्मात्रयुगलमभिमतं तत्र विभाषया पक्षान्त-रेणैकवदभिन्नत्वं भवतीति पक्षभेदश्च दर्शितः । नच भिन्नत्वेन स्वीकृतस्याभिन्नत्व-स्वीकारेऽपसिद्धान्त ; पक्षभे-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



देनेत्युक्तेः । पदैक्ये स्वीकाराऽस्वीकारवपसिद्धान्ततामासादथतो नतु भेदे, वस्तुनस्तु निरुक्तदिशाऽभेदएव इतरथा वाय्वादिषु गुणान्तरस्याकस्मिकत्वापातस्तदेतत्कल्पनं शास्त्रसम्मतम्। तदुक्तम्

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।

बालाग्रशतभागोपि न कल्प्योह्यप्रमाणकः"

इति आषाढवाते चलति द्विपेन्द्रे चक्रीवता वारिधिरेव काष्ठेति न्यायेन यथैव युक्त्या द्वैतवादो जेयस्तथैव क्षुद्राश्चार्वाकपाश्चात्य-ज्ञान-सन्तान-वादिनोपि निरसनीया इति ! परमाणुपरिमाणञ्च विष्णुधर्मोत्तरे वर्णितम्।

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।

तस्य त्रिंशत्तमो भागः परमाणुः प्रकीर्तितः॥

इति वाराहे च

आदावहं व्योम महत्ततोऽणुरेकैव मत्तः प्रबभूव बुद्धि

रित्यादिना तन्मात्रायाः प्रधानत्वमुक्तम्। विवरणप्रमेयसंग्रहेच सत्यपीन्द्रियादिसन्निकर्षे ज्ञानकादाचित्क्य-दर्शनात्सुखादीनां चक्षुरादिभिरनुपलब्धेश्चाणुरूपं मनः साधितं न्यायमतेन, वेदान्तिमतेन च सुखदुःखादि परिणामि मध्यम परिमाण मन्तःकारणं वर्णितं मायायाश्च "मम मायादुरत्ययेति" भेददर्शनाच्चिन्त्यब्रह्मतो भेदोदर्शितः। सर्वे विकाराः सुखदुःख मोहस्वभावसामान्यप्रकृतिकास्तदन्वितस्वभावत्वाद् ये यद-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्वितस्वभावास्ते तत्प्रकृतिका यथा मृदन्वितस्वभावाः शरावादयो मृत्प्रकृतिका इति त्रिगुणमयत्वञ्च दर्शितमिति। विमतं कार्य्यद्रव्यं स्वपरिमाणादणुतरपरिमाणारब्धं कार्य्य-द्रव्यत्वात् पटवदिति परमाणुकारणमामनन्ति परमाणुवादिनः चिच्छक्तिर्ब्रह्मैव जगदुपादानमिति मनुमतम् तदुक्तम्।

"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु बीजमवासृजत्"

इत्यादिना तद्विसृष्टश्च पुरुषो लोके ब्रह्मेति गीयते इत्यन्तेन ग्रन्थसन्दर्भेण। सुश्रुते च "भूतादेरपि तैजससहायात्त-ल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते इति तदेवं वस्तुनि विकल्पायोगात्सत्यपि संज्ञाभेदे न वस्तुभेद इति परमार्थः। इति

(१५) द्रव्यस्य गुणाश्रयत्वेन गुणाद्भेदो वा गुणसमुदायत्वेन तदभेदो वेति विचार संप्रवर्तते।

अत्रापि मतभेदेनोभयमपि ब्रूमः। तथाहि न्याय-नये द्रव्येषु गुणकर्मणोरिति समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेय-मिति च समवायसंबन्धाभिधानात्कार्य्यकारणभावाभिधा-नाच्च संबन्धस्य भेदसमानाधिकरणत्वाद् यौगपद्ये सव्येतर-विषाणवत् कार्य्यकारणभावाभावाच्च भेदः समायाति। (कार्य्यकारण) उपादानोपादेयाभेदवादिनये गुणसमुदायो द्रव्यमित्युक्तेः। समवायासिद्धेश्चाभेद इति। अपरे तु गुण-परिभाषयैव गुणानां द्रव्याश्रितत्वादाश्रयाश्रितयोराश्रयस्य

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्राधान्यम् नह्याधारं विना आधेयमवतिष्ठते आधाराधेययोश्चकुण्डवदरस्थले भेददर्शनात्तेजः पवननभोभेदाद्द्रव्यस्यैव तद्रसादेरपि भेदात् गो-महिष-दुग्ध जम्बू-खर्जूर-पिण्डखर्जूर-सितादि द्रव्यभेदान्माधुर्य्यरसभेदोपलब्धेः पार्थिवाग्नेयवायवीयभूमौ वापितबीजस्थले द्रव्यरसभेदस्य स्पष्टमुपलब्धेस्तोयाग्नि-सन्निकर्षशौचसंस्कारदेशकालभावनासंयोगविशेषाच्च गुणभेदोपलब्धेः ।

गुर्वादयोगुणा द्रव्ये पृथिव्यादौ रसाश्रये ।<br>
रसेषु व्यपदिश्यन्ते साहचर्य्योपचारतः ॥

गुरुत्वादिगुणानां द्रव्ये तद्रसादौ च स्वतः साहचर्याभ्यां व्यपदेशेन च भेदएव गुणद्रव्ययोः सिध्यति, तदेवं गुणसमुदायपक्षेऽपि प्रत्येकसमुदाययोर्भेद आश्रयणीयः । भेद एव च चरके "सर्वंद्रव्यं पाञ्चभौतिकं तद्गुणाः शब्दादयो गुर्वादयश्च द्रवान्ताः अनेनोपदेशेन नानौषधभूतं जगति किञ्चिद् द्रव्यमुपलभ्यते तां तां युक्ति मर्थं च तं तमभिप्रेत्य नतु केवलं गुणप्रभावादेव कार्मुकाणि भवन्ति द्रव्याणि गुणप्रभावात् । गुणद्रव्यप्रभावाच्च तस्मिन् २ काले तत्तदधिष्ठानमासाद्य तां तां च युक्तिमर्थंच तं तमभिप्रेत्य यत्कुर्वन्ति तत्कर्म इत्यादि सन्दर्भेण प्रदर्शित इत्याहुः । वस्युतस्तु द्रव्यगुणादीनां पृथगनुपलब्धेरभेद एव परमार्थः ।

(१६) तेजसो द्रव्यत्वं नवेति विचारः ॥ अत्र तेजसो द्रव्यत्वं सर्वतन्त्रसिद्धमिति विप्रतिपत्यादि संशयकारणाभावा-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्नैतद्विचारमर्हति । नहि स्फीतालोकमध्यवर्ती समनस्केन्द्रिय सन्निकृष्टो घटोऽस्ति न वेति विचार्य्यते । केवलं तमसोद्रव्य-त्ववादिभिस्तेजोऽभावस्तम इति वादिनं नैयायिकं प्रति समुप-क्षिप्तं तर्हि तेजएव तमसामभावरूपं मन्यतामिति । उष्ण-त्वादिगुणदर्शनाद् द्रव्यत्वमिति चेत् । नोलं तमश्चलतीति गुण-क्रियोपलब्ध्या तमसोद्रव्यत्वं न दण्डवारितं तदेवं समानयोग-क्षेमत्वादुभयं द्रव्यमिति । नहि तस्य द्रव्यत्वं प्रति कस्यापि विमतिं पश्यामीति । तल्लक्षणञ्चोष्णस्पर्शवत्वं भास्वररूप-वत्वञ्चेति । तदुक्तम्—

उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वर मिति'

रूपे भास्वरत्वं च परप्रकाशकत्वम् । उभयं क्वचिदुद्भूत-मनुद्भूतञ्च । सूर्य्ये उभयमुद्भूतं चन्द्रचामीकरादौ तादृशस्पर्शो-ऽनुद्भूतो भर्जनकपालस्थवह्न्यादौ तादृशरूपमनुद्भूतंचामी-करे चात्यन्तानलसंयोगेप्यनुच्छिद्यमानजन्यद्रवत्वेन व्यति-रेकिणा तेजस्वमनुमितं तदेतत्त्रपुसीसादिष्वपि समानचर्चम् ।

(१७) अथाकाशस्वरूपविचारः स भावोऽभावो वा आद्ये सावयवोऽनवयवो वा तत्राद्येके नाम तदवयवाः किं नाम ताल्लिङ्ग शब्दः, अवकाशोवेति । आद्यविकल्पे मतभेदेनोभय मिति ब्रूमः । तद्यथा न्यायादिमते द्रव्ये परिगणनाद्भावत्वम् आर्हतादिमते आवरणाभाव आकाश इत्युक्तेरभावत्वम् । वस्तु तस्तु आकाशाद्वायुरिति श्रुत्युक्ते भवित्वमेव नहि तुच्छमभावः

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



कारणं भवितुमर्हतीति । द्वितीयविकल्पेऽवयवानुपलब्धेराकाशवत् सर्वगतश्च नित्य इति निरवयवस्यात्मन स्तेनोपमानाच्च निरवयवत्वमायाति । घटाकाशादिव्यपदेशस्तु घटाद्युपाधिकस्तृतीयविकल्पे उभयमिति ब्रूमः । तद्यथा स शब्दप्रदेशस्थले शब्दस्येतरगुणत्वानुपपत्या शब्दस्तल्लिङ्गम् । अन्यत्र पद्याद्यवकाशदानादवकाश इति ।

(१८) अथ पञ्चमूलभूतेभ्यःएकैकमहाभूतानामुद्भवः कीदृशइति विचार्य्यते । मूलभूतानि सूक्ष्मभूतानि तन्मात्रारूपाणि शब्दतन्मात्रतः शब्दमात्रविशेषगुणं वियदुद्भवति शब्दस्पर्शोभयतन्मात्रतउभयविशेषगुणोवायु रेवं पूर्वपूर्वसहितोत्तरतन्मात्रतस्तदुत्तरमहाभूतत्रयमुद्भवति पूर्वपूर्वसाहित्यादेव वाय्वादिक्रमेण किञ्चित्स्थौल्याविर्भावात्पृथिव्यां तत्प्रकर्षोपलम्भः । तदुक्तम्

> महाभूतानि खं वायुरग्नि रापः क्षितिस्तथा ।
> शब्दः स्पर्शश्च रूपञ्चरसो गन्धश्च तद्गुणाः ॥
> तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे ।
> पूर्वपूर्वगुणाश्चैव क्रमशो गुणिषु स्मृताः ॥

(२०) अथ मनुष्यादि शरीरेषु चैतन्यमात्मजन्यं भूतसंयोगविशेषजन्यं वेति विचार्य्यते । अत्रापि मतभेदेनाभयमिति ब्रूमः । तद्यथा आस्तिकदर्शनमते बौद्धादिमते च पितृमातृतः समुद्भूते रजोबीजात्मके शरीरे अदृष्टवशाद्भोग्यभोक्तृभावेना-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्मसंबन्धे चैतन्य मुत्पद्यते तदभावेनेति । अनात्मवादिचार्वाक मते च किएवादिमदशक्तिवद्भूतसंयोगविशेषादेव चैतन्य मिति । अत्र बहूनामनुरोधा न्याय्य इति न्यायाच्छास्त्रसंमत्या चाद्यपक्ष एव श्रेयानिति । स्वभावाच्चैतन्यं कण्टकतैक्ष्ण्याद्विदिति केचित् । वीतरागजन्मादर्शनात्सरागो जायत इति शास्त्रोक्त्या सुख-दुःखादि-भोगादृष्टवशेनात्मसंयोगाच्चैतन्य मिति बहुवादिमतम् तदुक्तम्

विद्यात्स्वाभाविकं षण्णां धातूनां यत्स्वलक्षणम् ।
संयोगे च वियोगे च तेषां कर्मैव कारणमिति ॥

स्वभाववादिमतं निरस्तम् । जन्मान्तरकृतकर्मवशात्प्रेत्यभावः शरीरसंबन्धश्च परमेश्वरः सम्पादयति । तदुक्तम्

अनादेश्चेतनाधातोर्नेष्यते परनिर्मितिः ।
परआत्मा सचेद्धेतुरिष्टोऽस्तु परनिर्मितिरिति ॥

अतश्चेतनाहेतुनित्यत्वेन जन्मान्तरसम्बन्धिनमात्मानं गृहीत्वा शरीरं परः करोतीति सिद्धम् । (शारीरे द्वितीयाध्याये)

भूतानि चत्वारि तु कर्मजानि यान्यात्मलीनानि विशन्तिगर्भम् ।
स बीज धर्मात्ह्यपरापराणि देहान्तराण्यात्मनि याति याति ॥

यद्यप्यात्मा विभुत्वेन सर्वगतत्वेन नायाति तथापि यत्रास्य कर्मवशान्मनो याति तत्रैव चैतन्योपलब्धेरात्मा गत इत्युच्यते । आयुर्वेदाभिहितविचारेण तु गोमयाद्वृश्चिकोत्पत्तेः पर्णातुष-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



-काशादिसंसर्गात्कुणपसर्पोतिवच्चेः। सर्वतन्त्रसिद्धान्तेन यत्र रक्तं तत्र चैतन्यं तदभावे तदभाव इति स्वभाववादिनस्तु भावानां स्वभावः स्वो भावः स्वं स्वरूपं देवनरादिरूपं तत्स्वभावादेव देवनराद्यो जायन्ते। विनात्मानं पञ्चभिरेव भूतैरिति तस्मान्नास्ति परलोको नास्ति आत्मा नास्ति पुनर्भवः। तदेतन्मतं खण्डितं न स्वभावसिद्धिरापेक्षिकत्वादिति। कर्मापेक्षं हि जन्म तदुक्तम् सरागो जायते इति, पदार्थ मात्रविचारे नैकमत्यं तथापि स्वशास्त्रसिद्धान्तेन विचारः प्रवर्तनीयः, तदत्र दोषादिविचारे आयुर्वेदशास्त्रं परमं मान्यं ब्रह्मवादिनां हेतुवादिनाञ्च। तथाहि-वाग्भटे "दोष-धातुमलामूलं सदा देहस्य तं चलः। उत्साहोच्छ्वासनिः-श्वासचेष्टा वेगप्रवर्तनैः। इत्यादिना श्लेष्मास्थिरत्व-स्निग्धत्व सन्धिबन्धक्षमादिभिरित्यन्तेन वातपित्तश्लेष्मणां कार्य्या-ण्युक्तानि। (सुश्रुतेच) तथाच "दोषधातु-मलामूलं शरीरं तस्मादेतेषां लक्षणमुच्यमानमुपधारय" इत्यादिना ग्रन्थसन्दर्भेण सर्वेषां वातादीनां स्वरूपंकार्य्यञ्च सम्यङ्निरूपितम्। पुनरपि-सुश्रुते उक्तम्-पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविध-वीर्य्यस्याष्टविधवीर्य्यस्य वेत्यादिना रसस्वरूमुक्त्वा तस्या-प्यत्वं तैजसत्वं वेति संदिह्य स्नेहादिविशेषैराप्यत्वं व्यव-स्थाप्य यकृत्प्लीहसंबन्धेन रक्तत्वमुपपादितम्। तदुक्तम्।

रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम्।
अव्यापन्ना प्रसन्नेन रक्तमित्यभिधीयते इति।

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रसादेव स्त्रिया रक्तं रजः संज्ञं प्रवर्तते । तद्वर्षाद्द्वा-दशादूर्ध्वं याति पञ्चाशतः क्षयमिति"। तदेव रक्तं जीवनाधारक-त्वाज्जीवरक्तमित्युच्यते। विस्तारादि च तस्मिन् भूम्यादि धर्माः। सुश्रुते च अत्र किं जिज्ञास्यमित्यादिना सन्दर्भेण पित्तेऽग्नित्वं व्यवस्थाप्याहष्टविशेषेण च पक्वामाशये सर्वान्निपाचकत्वं प्रतिपाद्य स्थानविशेषे च नामविशेषेप्रतिपादनं कृतम् । कश्यपमतेन तु श्लेष्मैव सोमस्वरूपः कुपिताकुपितः शुभाशु-भानि करोति तत्तत्स्थानसम्बन्धात्तत्तत्कार्याणि करोति। आत्रेयस्तु–सर्वे वातपित्तश्लेष्माणः प्रकृतिभूताः पुरुषं महता आयुषा संयोजयन्ति सम्यगिवाचरिता धर्मार्थकामा निःश्रेयसेन पुरुषम् । विकृतास्तु महता विपर्य्ययेण ऋतव इव त्रयो विकृति-मापन्ना लोकमशुभेन, तेषाञ्च क्रियाविशेषेण मलिनिकरण-धारणादूषणादिना मलधातुदोषपदवाच्यत्वं प्रदर्शयामास। सर्वेषामपि व्याधीनां वातादय एव मूलानि तल्लिङ्गत्वाद्दृष्ट-फलत्वादागमिकत्वाच्च। तथाहि कृत्स्नं विकारजातं विश्व-रूपेणावस्थितं सत्वरजस्तमांसि नातिक्रामति एवं वाता-दीनपि। दोषधातुमलसंसर्गात् आयतनविशेषाच्च निमित्त-तश्चैषां विकल्पः दोषदूषितेषु धातुषु संज्ञा भवति। रसजोऽयं शोणितजोऽयं मांसजोऽयं मेदोजाऽयं अस्थिजोऽयं मज्जाजऽयं शुक्रजोऽयं व्याधिरिति। एवमेषां व्याधीनां नानात्वं भवति। दूष्यजन्मसंज्ञा च लक्षणया भवतीति दोषदूषितधा तु-जनितविकारेषु रसादिसंज्ञा, तथा वह्निसंयोगेन स्वयंमदाह-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



केभ्योऽपि घृतजलादिभ्योऽपि दग्ध इत्युच्यते तद्वद्रसादिजो व्याधाधिरिति । तदुक्तम्—

कुपितानां हि दोषाणां शरीरे परिधावताम् ।
यत्र सङ्गः स्ववैगुण्याद् व्याधिस्तत्रैव जायते इति ।

अथ वातादीनां ज्वरादीनां नित्यः संबन्धः परिच्छेदो वा । आद्ये नित्यातुराः सर्वे प्राणिनः स्युः । अथ मतं वातादयोऽन्यत्र वर्तमानऽन्यत्रज्वरादीनां मूलानोति । नैतदस्ति दाषान्प्रत्याख्याय ज्वरादोनामप्रवृत्तेः । अत्रोच्यते यथा विद्युद्वाताशनि-वर्षाणि गगनमन्तराऽवर्तमानान्यपि सत्यपि गगने कादाचित्कानि एवं नित्यसंबन्धात्सत्स्वपि वातादिषु ज्वरादि-कादाचित्कमिति अज्ञानादन्ये मूर्खत्व पराः परकाष्ठया निंदा-माचरन्ति नैतदधिगच्छन्ति किं विधितोऽर्थवादाद्वा मन्त्रा-दिभिरेतत्प्रतिपन्नमिति । तदेवं तमिस्रायां रूपादिकमिव दैवदोषात्स्वयं किञ्चिदप्यजानन् दीपशलभन्यायेनान्येषामपि ज्ञानमपहरति । तदुक्तम्

महतापि प्रयत्नेन तमिस्रायां पराभृशन् ।
कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति ॥
उज्ज्वलगुणभ्युदितं क्षुद्रो द्रष्टुं न कथमपि क्षमते ।
दग्धां तनुमपि शलभो दीपं दीप्तार्चिषं हरतीति ॥

तदेवं पाश्चात्त्यानां मुखमुद्रणाय पञ्च हेत्वाभासादिभिः स्थापनैषा कृता । एवमप्यत्र दोषसमर्थनाय तेषां प्रवृत्तौ संवत्स-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रपर्य्यन्तमपि लेखनी न कुण्ठता भविष्यतीति तदेवं वा गति-गन्धनयोः, तप संतापे, श्लिष आलिङ्गने धातुभिः कृतप्रत्ययेन कृतनिर्वचना वातादयो दूषणरसादिमलिनी करणाद् देह-धारणाच्च दोषधातुमलादिसंज्ञा भजन्ते। तदेतत्खण्डने प्रवृत्ता अपि मण्डेन एव पर्य्यवस्यन्तः सूत्रबद्धशकुनिन्यायं नाति-क्रामन्ति तद्यथा सूत्रबद्धः शकुनिः दिवसं प्रतिदिशं पतन्नपि बन्धनस्थानं नातिक्रामतीति नच दोषाः स्वस्वरूपे स्थिताः शरीरधारणाय विकृतास्तद्विनाशाय। ततुक्तम्

प्राकृतस्तु बलं पुंसां वैकृतो मलमुच्यते

इति तदेवं वातादिस्वरूपादिज्ञानात्तत्समाधाने प्रवृत्तः सुखं लभते इति स प्रयोजनस्तद्विचारः। दूषणादिक्रियाभेदा-द्दोषादिसंज्ञाभेदः प्रमाणादि क्रियाभेदात्प्राणादिसंज्ञाभेद इव न कंचन विरोधमावहति।

(३) दोषासंज्ञायां हेतुविचारः। दूषणात्सर्वधातूनामिति दोषः। दुष अप्रीतौ, कर्तरि घञ् प्रत्यये कृते दोषशब्दो व्युत्पा-द्यते। सचैष दोषः तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति महा-भाष्योक्त-न्यायेन मध्ये पतन् मध्ये पतद्दुग्धं दधीव सकलमेव शरीरं विकरोति क्षयेन संशोष्यात्मानमुपतापयति। रूक्षशीत-रात्रिजागरणादिभि र्वायुर्विक्रियते कट्वम्ललवणादिभिःपित्तम् अत्यशनशयनादिवास्वापादिभिः श्लेष्मा। एवं निशावसा-नादिकालविशेषे वायुः प्रकोपमापद्यते। मध्यंदिनादिकाल-विशेषे पित्तं सायंप्रातरादिकालविशेषे श्लेष्मा दूषणादि-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कार्य्यविशेषादेषा दोषादिसंज्ञा । तदुक्तं कार्य्यकालं संज्ञापरिभाषम् । यथोद्देशं संज्ञापरिभाषमिति । यथोद्देशं यथाकार्य्यं संज्ञापरिभाषणं भवति । यथाशास्त्रं लिखन् लेखक इति तथैव दूषणाद् दोष इति ।

( ४ ) कथं त्रय एव दोषा इति विचार्य्यते ।

दुषधातो र्घञ्प्रत्ययेन निष्पन्नो दोषशब्दो यद्यपि ज्ञानविद्यालेखवचनकर्मकार्य्येन्द्रियादिषु नानार्थ इति किमत्र गृह्यते इति सन्दिह्यते तथापि प्रकरणस्य तात्पर्य्यनिर्णायकत्वादायुर्वेदस्य विषयाविचारप्रकरणात्कपिञ्जलाधिकरणन्यायेन च दोषशब्देन त्रय एव वातादयो दोषा गृह्यन्ते । यथा कपिञ्जलानालभेतेति कपिञ्जलालम्भविधौ कपिञ्जलान् इति बहुत्वश्रवणात् तस्य च त्रित्वादिसमानाधिकरणत्वात् त्रिचतुरादि संदेहे । त्रित्वस्य प्राथम्यात्तत्त्यागे मानाभावात्त्रिमेव संख्या पर्य्यवस्यति । एवमत्र त्रित्वं पर्य्यवसातव्यम् । तदुक्तम् स्थातव्यम

कपिञ्जलेषु त्रित्वाद्या ऐच्छिकास्त्रित्वमेव वा ।

आद्यो बहुत्वसामान्यात्त्रित्वेनैव कृतत्वात् इति । तदेवं त्रय एव दोषा वातादयोऽन्ये दूष्या इति त एव च देह-धारणाद्धातवः । तैरेव चाव्यापन्नैरधोमध्योर्द्ध्वसन्निविष्टैः शरीरमिदं धार्य्यते स्थूणाभिरिवागारम् इति ।

( ५ ) वातादीनां द्रव्यरूपत्वं शक्तिरूपत्वं वेति विचार्य्यते । उभयमिति ब्रूमः । वातशब्दो वायौ दृष्ट इति द्रव्यवचनः । पित्तशब्दस्तपधातोर्निष्पन्नः सन्तापक्रियत्वादग्निवचनः श्लेषम-

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शब्दः स्पन्दनक्रियाद्रव्यवचन इति द्रव्यत्वम् । सामान्य-करणवृत्तिः प्राणाद्या वायवः पञ्चेति वचनात् । वृत्तिश्च चिवृत्तिमतः शक्तिरूपेऽपि शारीरकवायाः शक्तित्वमेव पित्तश्लेष्मणारपि शरीरस्थाग्निजलशक्तिरूपत्वं द्रष्टव्यमिति । वाता-दिद्रव्यम् । वैशेषिकादिभिर्द्रव्येषु परिगणनात् । तल्लक्षणन्तु गन्धासमानाधिकरणानुष्णशीतस्पर्शसमानाधिकरणाद्रव्यत्व—व्याप्य जातिमत्वम् । रूपसमानाधिकरणोष्णस्पर्शसमानाधिकर-णजातिमत्त्वम् । रससमानाधिकरणस्पर्शसमानाधिकरणजाति-मत्वं क्रमशा द्रष्टव्यम् । तैरेव चाव्यापन्नैः शरीरमिदं धाय्यते स्थूणाभिरिवागाररमिति । अतएव शरीरमिदं त्रिस्थूणमि-त्युच्यते । तदुक्तम्

नर्ते देहः कफादस्ति न पित्तान्न च मारुतादिति ।

रुक्षः शीतो लघुः सूक्ष्मश्चलश्च विशदः खर इत्यादि गुण-युक्तस्य वायोरकुपितस्य कर्म धरणीधारणं ज्वलनोज्ज्वालनम् आदित्यादिगतिसन्तानविधानं सृष्टिश्च मेघानामित्यादि-प्रकुपितस्य शिखरीशिखरावमन्थनमुन्मन्थनमनोकहाना-मुत्पीडनं-सागराणामित्यादि । सहि भगवान् भूतानां प्रभवा-प्रभवाऽपियः सुखासुखयोर्विधाता भावाभावकरः क्रान्ता-लोकानामायुरादिकरः । तदुक्तम्

वायुरायुर्बलं वायुर्वायु र्धाता शरीरिणाम् ।
वायु विश्वमिदंसर्वं प्रभु र्वायुश्च कथ्यते ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति ऐवं पित्तश्लेष्मणोरपि द्रष्टव्यम् ॥

( ६ ) वातादीनां स्थूलत्वं सूक्ष्मत्वमुभयत्वंचेति विचार्य्यते । अत्रापि कार्य्यकारणभेदेनापेक्षाभेदेन चोभयमिति पक्षः समायाति । तद्यथाऽपञ्चीकृतभूतानां तन्मात्रारूपाणां सूक्ष्मत्वमिति सूक्ष्मभूतव्यपदेशः । पञ्चीकृतानां स्थूलत्वमिति महाभूतव्यपदेशः पृथिव्यपेक्षया सूक्ष्मत्वमाकाशापेक्षया स्थूलत्वमिति च परस्परञ्चैषां स्थूलसूक्ष्मव्यपदेशः । श्लेष्मापेक्षया वातपित्तयोः सूक्ष्मत्वं तदपेक्षया श्लेष्मणः स्थूलत्वमिति सर्वमिदं प्रमाणात्सिद्धम् । प्रमाणश्च प्रमाविवक्षितजातिविशेषव्यपदेशकः । विवक्षितपदं भाण्डालेख्यन्यायेन तथालेख्यं रेखोपरेखादिनाभाण्डविशेषलक्षणं साधारण्यादेवं विवक्षापि पुरुषाधीनत्वान्न वस्तुविशेषलक्षणमिति एषां परस्परमभिभाव्याभिभावकभावश्च भूयसाल्पं विजीयते इति तदुक्तम् चरके

रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विषदः खरः ।
विपरीतगुणैर्द्रव्यैर्मारुतः सम्प्रशाम्यति ॥

सस्नेहमुष्णं तीक्ष्णञ्च द्रव्यमाम्लं परं कटुः । गुरुशीतमृदुस्निग्धा मधुरस्थिरपिच्छला इतिक्रमशस्तत्स्वरूपमिति ॥

## (७) किं वातादीनामुपादानमुपादानात्तेषामुत्पत्तिक्रमश्च क इति विचार्य्यते ।

स्थूलवातादीनां सूक्ष्मवातादि सूक्ष्माणां मतभेदेनात्माहंकारश्चेति उत्पत्तिक्रमश्च न्यायमते द्व्यणुकादिक्रमेण मतान्तरे आत्माकाशादिक्रमेण चेति । अपि च वायोरुपादानमाकाश



CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



आकाशस्य च शब्दस्तदेवं शब्दस्पर्शगुणो वायुरिति । अग्नि मारुतयोः पित्तमाकाशपवनदहनगुणयुक्तम् । शोणितमपि दोषेषु केचिद्वर्णयन्ति । तथा च चरकः

कफे व्याप्ते जितप्राये पित्तं शोणितमेव वा ।
यदि कुप्यपि वातस्य क्रियमाणे चिकित्सिते ॥

इति सुश्रुते च शोणितस्य दोषत्वमुक्तम् । हेतुसमानत्वाच्च वातादिसमानमस्य दोषत्वं यैरेव वातादयो दुष्यन्ति तैरेव शोणितमपि । तदेवं वातादीनां दोषत्वं शोणितस्य च दूष्यत्व-मिति केषांचित्प्रलपनमपास्तम् । दोषत्वादेव च शोणितस्य वातादिभिः समानो हेतुलक्षणविकारचिकित्सानिर्देशः । चरके "कफे व्याप्ते जितप्राये" इत्युक्तम् ।

( ८ ) मातादीनां गुणः कर्माणि च । तदेतबहुशः वर्णितमपि स्थूणानिखनन्यायेन दृढीकरणाय पुनरपि वर्ण्यते । लघुरूक्षादयः वायुगुणाः उष्णादयः पित्तगुणाः लघुशीतादय-श्लेष्मगुणाः ते च वातादय क्रमश

"उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ।
सम्यग्गत्याच धातूना मक्षाणां पाटवेन च ।
अनुगृहणात्यविकृत पित्तं पक्त्युष्मदर्शनैः ।
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।
श्लेष्मास्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः"

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



रुपकरोति । अपि च

"स्रंसव्यासव्यधस्वापसादरुक्तोदभेदनम् ।
संगांगभङ्गसंकोचवर्तहर्षणतर्पणम् ॥
कंपपारुष्यसौषिर्यशोषस्यन्दनवेष्टनम् ।
स्तंभः कषायरसता वर्णः श्यावोरुणोऽपि वा ॥

इति दाहो रागोष्मपक्तृता कटुकाम्लौ रसौ वर्णः पाण्डुर इति ।

स्वेदः क्लेदः स्तुतिः कोथः सदनं मूर्छनं सद

इति च क्रमशस्तेषां द्रष्टव्यम् ।

नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः ।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः ॥
उत्साहोच्छ्वासनिःश्वासचेष्टाधातुगतिः समा ।
समो मोक्षो गतिमतां वायोः कर्माविकारजम् ॥
दर्शनं पक्तिरुष्मा च क्षुत्तृष्णा देहमार्दवम् ।
प्रभाप्रसादो मेधा च पित्तकर्माविकारजम् ।
स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम् ।
क्षमा धृतिरलोभश्च कफकर्माविकारजम् ॥

इत्यादि क्रमशो गुणकर्मादि द्रष्टव्यम् ।

(९) वातादीनां स्वरूपं तेषां प्रत्येकं पञ्चविधत्वं वास्तविकं काल्पनिकं वा । तथा तत्स्थानकार्य्यभेदोत्पन्नं वा तत्स्वरूपभेदोत्पन्नं वा इति विचार्य्यते ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वरूपं च पूर्वं बहुशो वर्णितं सम्प्रति स्थानकार्य्यभेदनिबन्धनमौपाधिकं पञ्चविधत्वं प्रतिपाद्यते । तद्यथा

प्राणोदानसमानाख्यव्यानापानैः स पञ्चधा

इत्युक्तदिशा वायुः पञ्चविधः । तत्र प्राणः शीर्षादिस्थानः ष्ठीवनादिकार्यकृत् । उदानो नाभ्यादिस्थानो वाक्प्रवृत्यादिकार्य्यकृत् । समानः पार्श्वादिस्थानोऽग्निवलादिकृत् । व्यानः सर्वदेहस्थानः शीघ्रगत्यादिकृत् अपानो वृषणादिस्थानो मूत्रादिकृत् । एते सन्मार्गस्था गर्भादिकारिणो विमार्गस्था रोगादिकारिणः । एवं पित्तमपि स्थानक्रियाभिः पञ्चधा भिन्नम् । आमाशयहृदयदृष्टित्वगादि स्थानं पाचकसाधकालोचकभ्राजकादिसंज्ञं रागमनोरथरूपाभ्यङ्गादिकारकं, श्लेष्मापि माधुर्य्यादिलक्षणः आमाशयोरोहृदयजिह्वामूलशिरःसन्धिस्थानः शेषानुग्रहहृदयावलम्बनरसज्ञानस्नेहसन्तर्पणरसज्ञानसर्वसन्ध्यनुग्रहकर इति । वाग्भटेऽपि पक्वाशयकटिसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियमित्यादिना व्यापिनामपि जानीयात्कर्माणि च पृथक् पृथगित्यन्तेन ग्रन्थसन्दर्भेण स्थानकार्य्यभेदनिवन्धनं पञ्च-विधत्वमुक्तम् । स चायं येषां मते सृष्टिपुरातनी प्रतिकल्पं नानात्ववती एकादशमहाकल्पकथा च । आवट्यजैगीषव्यादिसंवादे समुपलभ्यते योगविधिना रसायनकल्पनया ते दीर्घायुर्लभन्ते सत्यं वातपित्तश्लेष्माण इति मन्यन्ते तैः सह । येषामद्यावधि वस्तुसिद्धान्तसीमा नाभूत्तै रेतैः सह को विवादः । समानज्ञानवता वादमभिदधति

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



नीतिकुशलाः । यश्च ज्ञानविलक्षणो घटमालोक्य पटं वदेत् तदुक्त्या किं घटः पटो भवेत् । लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः । कार्य्यकालं संज्ञापरिभाषमिति । ऐकमपि वस्तु कार्य्यभेदान्नानासंज्ञावद्भवति तदेवमज्ञानां भूरि भ्रममालोक्य भ्रमनिवारणमशक्यमिति विरम्य प्रकृतमुपसंहरामि ।

इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् ।
व्यापिनामपि जानीयात् कर्माणि च पृथक् पृथगिति ॥

(१०) वातादीनां रोगकारणत्वं कीदृशम् तेषामेव रोगकारणत्वमुतान्येषामपि कीटादीनाम् ।

अत्रोच्यते द्वविंशत्यावरणैः आवरणहेतुस्वस्वकारणेन क्षयवृद्ध्यादिना परस्परसंयोगादिप्रकोपाद् यो रोगो बलवान् स एव स्वस्वरूपं प्रकटयति हीनः स्वलिङ्गमात्रं जनयति । नह्यत्र विज्ञानां सन्देहः अज्ञानां बोधनं तु दुस्तरम् । नह्यन्धस्याज्यावेक्षणोपेते कर्मण्यधिकारो न चाज्ञः प्रकृतविषयेऽधिक्रियते । अधिकारिणमाश्रित्य तु किंचिदुच्यते । सर्वं विस्पष्टमत्र भारतवर्षे ।

कालार्थकर्मणां योगा हीनमिथ्यातिमात्रकाः ।
सम्यग्योगश्च विज्ञेयो रोगारोगैककारणम् ॥
विकृता-विकृता देहं घ्नन्ति ते वर्तयन्तिच ।
रोगस्तु दोषावैषम्यं दोषसाम्यमरोगता ॥

रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ । ते दोषाः

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वार्जि तदैवदुर्विपाकात् प्रजापराधाद्दिवास्वापादिदोषाद् बलवद्विग्रहादिदोषात् प्रकोपमापद्यमानाः प्रसरन्ति। आयुर्वेदस्य च प्रमाण्यं न्यायसूत्रे दृष्टान्तितं मंत्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य माप्तप्रामाण्यादिति यथा महानुदकसञ्चयः सर्वतः सीमानमवदार्य्य प्रसरति एवं ते दोषा अनेकधा प्रसरन्ति। आकाशे मेघवत्सर्वाङ्गे प्रसरति । तदत्र किञ्चिदुदाहरामि। जिह्वामूले प्रकुपितः श्लेष्मा उपजिह्वामुत्पादयति गले तिष्ठन् गलग्रहम् । एवं पित्तमपि त्वचि तिष्ठद्विसर्पहेतुरक्ते पिपीलिकां वातोपि प्लीहानम्प्रति प्लीहानं वर्धयति। विरुद्धरसादिदोषानुदीरति । तदुक्तम्—

विरुद्धपाकतश्चापि दुष्टदुर्दारुसाधितम् ।
अपक्वतण्डुलात्यर्थं पक्वदग्धञ्च यद्भवेत् ।

संयोगतो विरुद्धं यथा दधिपयसी एवं प्रत्यक्षाऽप्रत्यक्षरूपेण दोषाः सर्वान् रोगानुत्पादयन्ति। कृमितोऽपि रोगा भवन्ति तदेवं सर्व एव विकारा वातपित्तश्लेष्मभ्यो विवर्तन्ते यथाहि-शकुनिः सर्वं दिवसमपि परिपतन् स्वां छायां नातिक्रामति। तथा च स्वधातुवैषम्यनिमित्ता विकारा वातपित्तकफान्नातिवर्तन्ते इति।

(१६) ईथराख्यस्यास्तित्वश्चेत्तस्य कुत्रान्तर्भावः आकाशे तेजसि, वायौ वा कथं च सः ।

स खलु ईथरो भावपदार्थः अदृश्यत्वादाकाशे, सपदि क्रियावत्वाद्वायौ तीक्ष्णत्वात्तेजसि चान्तर्भवति। न चैकस्याने-अनेक रूपत्वं विरुध्यते ब्रह्मण एकस्यापि नानारूपत्वात् "सर्वं

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



खल्विदं ब्रह्मेति । अथ मन्यसे ब्रह्माचिन्त्यशक्ति महामायं भवितुमर्हति । सर्वरूपं न तु प्रकृतमिति । नैष दोषः ईश्वरस्यापि वाय्वादिरूपत्वेन अचिन्त्यशक्तिसम्भवात् तत्रापि गौणस्य ईश्वरपदस्य वाय्वादिवत् प्रयोगसम्भवात् । तदेतन्नानाशक्तित्वाच्छब्दमर्यादया च लभ्यते । नानाशक्तिमत्त्वमुक्तम् । शब्दमर्य्यादा च विचार्य्यमाणा ईश्वरपदस्यैवापभ्रंश ईथरपदमिति पर्य्यवस्यति यथा गोपदस्य गावी गोनी गोपोतलिकेति । द्विविधो हि शब्द साधुरसाधुश्चेति । असाधुरेव चापशब्देन भाष्यते । शक्तिरूपसम्बन्धेनोभयोरपि स्वार्थप्रत्यायकत्वम् तदेतच्छब्दज्ञेन वैयाकनणेन सुप्रतिपन्नम् । तदुक्तम् योहि शब्दान् जानाति अपशब्दानप्यसौ जानाति केवलमपशब्दज्ञाने तदुच्चारणे चाधर्मबाहुल्यं तदप्युक्तं यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽधर्म इति । तदेवमीश्वरपदमीथरपदेन व्यवहरन्तः पाश्चात्याः प्रत्यवयन्त्येव अथवा अवाग्योगवित्त्वादज्ञानं तेषां शरणम् । तदप्युक्तं वाग्योगविद्दुष्यति। चापशब्दैरिति । वाचोयोगोवाग्योगः प्रकृतिप्रत्ययार्थविभागेनार्थविशेषपरत्वं तद्वेत्तीति वाग्योगवित् । स च वैयाकरणः । यथाहि अपशब्दा देशभेदेन नानाविधा यथोक्तम् गावी, गोणी गोपोतलिकेत्यादि । एवं शब्दोऽपि नानाविधः तदुक्तम् । "चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दा गुण शब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चेति" । स एव चार्थो देशभेदेन नानाशब्देनोच्यते गत्यर्थेषु रंहतिः प्राच्यमगधेषु

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



गमिमेवत्वार्या भाषन्ते। तदत्रेश्वर एवार्थः ईश्वरशब्देनात्रै-रुच्यते । ईश्वरशब्देन पाश्चात्यैरिति शिलप्यते शब्दस्य चतु-र्विधत्वं भाष्ये उक्तम्। "नामाख्यातोपसर्गनिपाताः तदुक्तम्।

चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते संशयोप्तत्तेर्नोपसर्गनिपातयोः ।
"तयोरर्थाभिधाने हि व्यापारो नैव विद्यते
यदर्थद्योतकौ तौ तु वाचकः स विचार्य्यते"

इति सप्त पदार्थै परिसमाप्त जगदिति। क्रियावत्वादीश्वर-पदार्थौ द्रव्येऽन्तर्भवन् वाय्वादिरूपतां नातिक्रामति–इति विरम्यते।

इतरविचारान्तरविषयेऽपि नीचादप्युत्तमां विद्यामिति न्यायेन पाश्चात्यादपि स्वोपयोगिक्रियाकौशललाभे का क्षतिः लोकतः सच्छास्त्रतोऽसच्छास्त्रतो वा पदार्थलाभेन ज्ञानवन्धनं न्याय्यं विन्द्वादिक्रमेण घटोदकसञ्चयवत्। रसकणलाभेन मधुसञ्चयवच्च ज्ञानदार्ढ्यम्भवति । देशकालाद्यनुकूलं सर्व-मादेयमिति परमार्थः ॥

पदार्थानेकत्वान्मतिविभवमान्द्यादपि तथा ।
क्षणानामल्पत्वाद्बहुविषयबधाविवशतः ॥
नचोक्तं यत्सम्यक्तदिह भवतु क्षम्यमखिलम् ।
मतीनां सम्भ्रान्ति र्भवति च मुनीनामपि यतः ॥१॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# उपसंहार

अथेदानीं काश्यामियं सभेति काशीपतिर्विश्वेश्वर एव साक्षात्सभापतिः सचायं सभायां सभापतिर्वर्णनीय इति संक्षेपतो वर्ण्यते। अनेन च ब्रह्मादिपञ्चमूर्त्तिभिः सर्वमिदं विस्तृतम्। ब्रह्मात्मकेशादिपञ्चमूर्तिभिरव्यक्तादि श्रौतादिचाध्यात्मं सर्वमधिष्ठितम्। शर्वाद्यष्टमूर्तिभिरधिभूतं भूम्यादि अधिदैवतञ्चाधिष्ठितम्। भूम्यादिकञ्चास्यैव मूर्त्यष्टकं सर्वचराचरादिधारणादिजनकं, स्वात्मकमूर्तिश्चास्थनररसर्वव्यापिका तदिदं विश्वं सर्वं शिवात्मकमित्युच्यते। मूलवृक्षसेकन्यायेनैतत्पूजया सर्वं पूजितम्भवति।

पुत्रपितृप्रीतिन्यायेन च

सर्वप्रीत्यायंऽयं प्रीतो भवति निग्रहेण च निगृहीतो भवति। शिवाशिवयोः शक्तिसङ्गमेन व्यवस्थितं सर्वस्मिन् चिदचिदात्मके शुद्धाशुद्धस्वरूपे शुद्धस्वरूपस्वात्म्ये स्वाम्यं तेनैवास्येश्वरत्वं, चन्द्रचद्रिंकयोरिवानयोरभेदश्चन्द्रचद्रिंकान्यायेन भानुप्रभान्यायेनचानयोः परस्पराश्रयवत्वम्। सचेत्थम् चिद्रूपा शक्तिः शिवेच्छया सर्वं जनयति। प्रकृतिर्माया त्रिगुणा चेति गीयते। शिवस्य ब्रह्मविष्णवादिरूपत्वेनेयं लक्ष्मीः सरस्वतीति चोच्यते। यावत्स्त्रीपुंसात्मकं सर्वं शिवशिवात्मकं

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदनयोः परां भूतिं विद्वान् परां भूतिमश्नुते । तदिदं सशिवः सर्वमेवेदं स्वकीयाभिश्च मूर्तिभिरित्यादिना सोऽपरां भूतिमुल्लङ्घ्य परां भूतिं समश्नुते इत्यन्तेन पुराणसन्दर्भेण प्रतिपन्नम्

यद्यप्यन्ये निबन्धाः स्फुटमिह शतशः
सन्ति सर्वेष्टसिद्धयै
नैवास्माकं तथापि प्रकृत कृतविति-
र्जातु वैफल्यमीयात्
सन्त्येवान्ये सिताद्याः सुलभरसचयाः
स्वादु नैजं भजन्तः
किन्नो लब्धः स तावत्प्रवचन-मिलिते
पानके यो विशेषः ॥ १ ॥
यस्मात्सर्वे भवन्तो निजमतिविभवैः
शास्त्रपारं प्रपन्नाः
तस्मात् श्रीमत्पुरस्तान्मम मृदु वचनं
बालवाणीत्वमेतु ॥
किन्नो भास्वत्पुरस्ताद्रचयति भुवने
भक्तितो दीपलेखाम् ।
नो वा किं पूर्णकामे भगवति गिरिशे
स्वल्पवस्तूपहारम् ॥ २ ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वेषामिष्टसिद्ध्यै सद इह भिषजां
यत्सुधर्मेव भाति ।
यत्रेदं शास्त्रतत्त्वं सततमिह बुधै-
श्चिन्त्ययते शिष्यवर्गैः ।
या च प्रसादमाला सुविततिरपरा
दृश्यते काशिकेयम् ।
नैतच्चित्रंतुबोध्यं किमिति न विदितं
नामतः शम्भुरेषः ॥ २ ॥
काश्यां दृष्टिः पुरस्तात्तदनु सुरनदी-
स्नानमीशानपूजा ।
तत्पश्चाद्देवतुल्यैः कृतिभिरिह सभा-
ऽधिष्ठिताऽदर्शि वाचाम् ।
माधुर्यास्वादतृप्तिर्जनिरपि सफला
मन्यते सर्वमेतत् ।
प्राचःपुण्यस्य जातं फलमिह कृपया-
मुष्य नामेश्वरस्य ॥ ४ ॥
न वेदस्य ज्ञानं स्मृतिवचनविज्ञानमपि नो ।
पुराणे का वार्ता भवतु ननु का दर्शन कथा ॥

CC-0. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



न वृत्त व्याकृत्योर्वचनचयभङ्गीपरिचयः ।
तथाप्येषत्रुट्यद्वचनकुसुमैः पूजनविधिः ॥ ५ ॥

सर्वं विज्ञातमेव स्फुरति च सततं
श्रीमतां शान्तिचित्ते ।
नाज्ञातं ज्ञापनीयं किमपि च भवतां
शिष्यते शास्त्रवस्तु ॥
ज्ञानं नो ज्ञापनीयं भवति खलु यतो
दोषएवानुवाद-
स्तास्माच्छ्रीमत्पुरस्तान्नतिमतिरचय-
न्नाश्रये मूकभावम् ॥ ६ ॥

R530.9,CHA-S
28067

इति शिवम्

---

CC-0. Gurukul Kangri Collection, Haridwar